॥ श्रीः ॥

विद्याभवन संस्कृत ग्रन्थमाला

४२

3·2

वाराणसी–दरभङ्गा–उभयविश्वविद्यालयस्वीकृत

# संस्कृत-व्याकरणम्

रचनानुवाद-निबन्धखण्डद्वयोपेतम्

सम्पादकः—

पं० रामचन्द्रझा व्याकरणाचार्यः

( भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा )



चौखम्बा विद्याभवन, वाराणसी-२२१००१

॥ श्रीः ॥

विद्याभवन संस्कृत ग्रन्थमाला

४२

वाराणसी–दरभङ्गा–उभयविश्वविद्यालयस्वीकृत–

# संस्कृत-व्याकरणम्

रचनानुवाद-निबन्धखण्डद्वयोपेतम्

सम्पादकः—

प० रामचन्द्रझा व्याकरणाचार्यः

( भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा )



चौखम्बा विद्याभवन, वाराणसी-२२१००१

१९७६

THE

VIDYABHAWAN SANSKRIT GRANTHAMALA

42



# SANSKRIT-VYĀKARAṆAM

( A Book of Sanskrit Grammar, Translation and Composition )

By

Pt. RAM CHANDRA JHA



THE

CHOWKHAMBA VIDYABHAWAN

VARANASI

1976

# मधुराष्टकम्

( जगद्गुरुश्रीमद्वल्लभाचार्यविरचितम् )

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ १ ॥
वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ।
चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ २ ॥
वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ ।
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥
गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥
करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम् ।
वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥
गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीचिर्मधुरा ।
सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥
गोपी मधुरा लीला मधुरा युक्तं मधुरं भुक्तं मधुरम् ।
इष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ७ ॥
गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा ।
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ८ ॥

# उद्गारः

आचार्यः श्रीजटाशङ्करझा

( अध्यक्ष : राजकीय संस्कृत महाविद्यालय, पटना )

प्रतिभाशाली पण्डितवरिष्ठः श्रीरामचन्द्रझामहोदयः 'संस्कृतव्याकरणम्' बालव्युत्पत्तिहेतवे प्राचीनां नवीनाञ्च बोधनशैलीमुपन्यस्य नवीन-परीक्षा-पाठ्यग्रन्थतया निर्द्धारितं सङ्कलनया विरचय्य छात्राणां तत्परीक्षार्थिनां पुरस्तादुन्मिषदन्धतमसं व्याकरणाऽज्ञानरूपं सर्वथाऽपाकरोत्, हरिकारिकाधारेण चास्मिंस्तद्रूपा एव कारिका निर्माय छात्राणां कृते महत्सौकर्यमुत्पादितवान् ।

रचनानुवादखण्डेन छात्रा वाक्ययोजनाप्रकारं साधु शिक्षेरन् निबन्धखण्डेन च विविधविषयानवलम्ब्य निबन्धान्तरलेखनपाटवमाप्नुयुरितिपुस्तकमिदमधीत्य व्याकरण-रचनानुवाद-निबन्धानां काममपि विधामाश्रित्य जाग्रतीं प्रश्नावलीं समाधातुं शक्नुयुरेव परीक्षार्थिनः । व्युत्पत्तिशक्तिवर्द्धनेऽपीदं बालानामतीवोपकुर्यात् ।

झामहोदयस्य कठिनविषये सरलीकरणोपायचातुरीं जानन्ती लेखनी चिरात् प्रसिद्धा स्वकुशलतां सर्वतोभावेनाऽत्र समदर्शयदिति भूयो भूयः प्रशंसापरा वाग् विरन्तुं नेहते । छात्रोपकारि पुस्तकमिदं सर्वथा प्रशंसार्हम् ।

पाटलिपुत्रम्
जून १९५९

—जटाशङ्करझा

# सम्मति-सारः

'संस्कृतव्याकरणम्' नाम पुस्तकमिदं विलोक्यानुभूय च तद्बहूपादेयत्वं संस्कृतसंसारे प्रतिगृहञ्चास्यावश्यकत्वमनुमनुते सुकुमारमतीनां छात्राणामुत्तरोत्तरमभिवृद्धय इति—

आचार्यः श्रीकपिलेश्वर शास्त्री

( प्रधानाचार्य : ध० स० संस्कृत महाविद्यालय, मुजफ्फरपुर )

आचार्यः श्रीब्रह्मदत्तद्विवेदी

( प्राध्यापक : राजकीय संस्कृत महाविद्यालय, पटना )

आचार्यः श्रीमदुपेन्द्र झा

( अध्यक्ष : रमेश्वरलता महाविद्यालय, दरभंगा )

आचार्यः श्रीयदुनन्दन उपाध्यायः

( प्राध्यापक : काशी हिन्दू विश्वविद्यालय, वाराणसी )

आचार्यः श्री बी० आर० शर्मा

आचार्यः श्रीशोभाकान्त झा

( प्राध्यापक : मिथिला विद्यापीठ, दरभंगा )

आचार्यः श्रीमदनमोहन झा

( प्राध्यापक : राजकीय संस्कृत महावि०, भागलपुर )

आचार्यः श्रीकृष्णमोहनठक्कुरः

( अध्यक्ष : रणवीर संस्कृत विद्यालय, वाराणसी )

श्री पं० शिवानन्द झा

( कन्हवार, नौढ़िया, रीवां, मध्यप्रदेश )

# शुभाशंसा

मान्नीय श्री पं० आदित्यनाथ झा, आई० सी० एस०

( प्रथम उपकुलपति, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी )

पण्डितश्रीरामचन्द्रझाविरचितस्य संस्कृतव्याकरणनामधेयपुस्तकस्य भूयसोंऽशान् समीक्ष्य स्थालीपुलाकन्यायेन सोत्साहमिदं गदितुं शक्यते यदीदृशग्रन्थाः क्रमिकश्रेणीबद्धाः संस्कृतव्याकरणस्य प्रकाशिताः स्युस्तदाऽवश्यं सुरभारत्याः प्रचुरप्रचारकार्ये महत् साहाय्यं स्यादिति ।

वाराणसी
जुलाई १९५९

आदित्यनाथ झा

( २ )

आचार्यप्रवरः श्रीसभापतिशर्मोपाध्यायः

( प्रधानाचार्य : बिरला संस्कृत महाविद्यालय, वाराणसी,
भू० पू० सदस्य विधानपरिषद्, उत्तर-प्रदेश )

संस्कृतपरीक्षाप्रविष्टच्छात्त्राणां कृते व्याकरणाचार्यश्रीरामचन्द्रझामहोदयेन निर्मितं संस्कृतव्याकरणमन्तेवासिनः सन्तोषयदस्य श्लाघनीयश्रमं सफलयिष्यतीति मन्यमानो ग्रन्थकृते धन्यवादान् वितरति—

६-७-५९
वाराणस्याम्

सभापतिशर्मोपाध्यायः

# प्राक्कथनम्

आचार्य : श्रीबदरीनाथशुक्लः

( प्राध्यापक : वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी )

पं० श्रीरामचन्द्रझामहोदया आत्मनोऽनेकाभिः कृतिभिः संस्कृतजगति सुप्रसिद्धाः । एतेषां समयोचिता अनुवादात्मका मौलिकाश्च बहवो ग्रन्थाश्चिरकालतः संस्कृतच्छात्रानुपकुर्वन्ति । संस्कृतविद्यार्थिनां सामयिकीरावश्यकताः सूक्ष्मेक्षिकया-ऽभिवीक्ष्य तत्पूर्त्युपायानां निष्पत्तय एते सततं सावधानाः सचेष्टाश्च भवन्ति । इत एभिः सर्वथा सत्यमनुभूतं यद् विद्यार्थिनो लघुकौमुदीसदृशग्रन्थानधीयानाः प्रयोगसाधन एव विशेषेण बद्धदृष्टितया शुद्धवाक्यानां लेखनेऽधीतं व्याकरणमुपयोक्तुं न प्रभवन्ति । अतः कश्चिदीदृशः संक्षिप्तकायो व्याकरण-रचनानुवाद-निबन्धग्रन्थस्तेभ्य आवश्यको यदध्ययनेन तेषामेषा त्रुटिर्दूरीकर्तुं शक्येत । अनयैव भावनया परमव्युत्पन्नैर्विद्यार्थिषु व्युत्पत्तिमाधित्सुभिश्च पण्डितप्रवरैरेभिः 'संस्कृतव्याकरणम्' महताऽवधानेन सुप्रणीतम् । मन्ये, यदीदं पुस्तकं पाठ्यग्रन्थेषु यथास्थानं सन्निवेश्येत, च्छात्रैश्च यथोचितं परिशील्येत तदा परीक्षार्थिनामद्यत्वे प्राप्यमाणा लेखनदोषा अवश्यं दूरीभवेयुरिति ।

प्रकृतपुस्तकप्रचारकामः—

वाराणसी
१–७–५६

—बदरीनाथशुक्लः

# आमुखम्

आचार्यः श्रीरामकुबेरमालवीयः

( प्राध्यापक : वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी )

श्रीशङ्करेण स्वकरेण भाले सिन्दूररागेण विभूष्यमाणा ।
गौरी शिवायास्तु निमीलिताक्षी स्मेरानना सङ्कुचिताङ्गभङ्गी ॥ १ ॥

श्रीमता पण्डितेन्द्रेण रामचन्द्रेण धीमता ।
झोपाख्येन सदाचार-शीलसद्भावशालिना ॥ २ ॥
शब्दशास्त्रे महारण्ये निरातङ्कं विहारिणा ।
अनेन सिंहराजेन गजमौक्तिक-सन्निभम् ॥ ३ ॥
पदार्थजातं प्रोद्धृत्य नखसङ्काशया धिया ।
कण्ठहारविधानार्थं ग्रन्थेऽस्मिन् विनिवेश्य तत् ॥ ४ ॥
शिशुवच्छात्रसंघाय प्रेमोपायनवत् कृतम् ।
गृह्यतां सादरं सर्वैं रोगभिर्भेषजं यथा ॥ ५ ॥
ते ते व्याकरणस्याऽत्र विषयास्तरणीकृताः ।
परीक्षाऽध्यन्तयात्रार्थं साधनत्वं वहन्ति ये ॥ ६ ॥
अन्धकूपपरीक्षायामज्ञानध्वान्तसञ्जुषि ।
दीपायतां निबन्धोऽयं सदर्थमणिसम्भृतः ॥ ७ ॥
श्रीमद्रामकुबेरस्य मालवीयस्य सादरम् ।
निवेदनमिदं रम्ये सदारामे सुमायताम् ॥ ८ ॥

वाराणसी
जून १९६४

—रामकुबेरमालवीयः

# आभार-प्रदर्शन

विश्व की समस्त भाषाओं का उद्गम संस्कृत भाषा ही है—ऐसा भाषा-शास्त्रियों का मत है। विशेष कर राष्ट्रभाषा हिन्दी के सर्वांगपूर्ण ज्ञान के लिये तो संस्कृत के अध्ययन की अनिवार्यता सर्वमान्य ही है। सम्भवतः इसीलिये संस्कृत के प्रचार एवं प्रसार के हेतु सब ओर से विविध प्रयत्न हो रहे हैं। प्रस्तुत पुस्तक का प्रकाशन भी उसी परम्परा की एक कड़ी है।

इस पुस्तक में अनुशीलनी कारिकाओं का निर्माण 'हरिकारिका' के आधार पर ही किया गया है। गुरुमुख से प्राप्त कारिकाओं का भी यत्र-तत्र सन्निवेश है।

काशी हिन्दू विश्वविद्यालय, सम्पूर्णानन्द संस्कृत विश्वविद्यालय तथा कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालयों के वरिष्ठ अधिकारियों ने इस पुस्तक को मान्यता देकर लेखक को अनुगृहीत कर प्रोत्साहित किया है, अनेक सम्माननीय विद्वानों की सुसम्मतियाँ भी इस पर प्राप्त हुई हैं, जिनका अविकल प्रकाशन स्थानसापेक्ष होने से नहीं हो सका है। अतः उन विद्वानों का तथा पुस्तक के निर्माण में जिन महानुभावों से रचना, वाणी, परामर्श, प्रोत्साहन, आशीर्वाद आदि द्वारा प्रत्यक्ष या अप्रत्यक्ष सहयोग प्राप्त है, उन सबका भी लेखक हृदय से आभारी है और 'आमुख' लेखक कविशेखर श्री मालवीय जी के आशीर्वाद का तो पूजारी है।

इस पुस्तक के निर्माण में रणवीर सं० विद्यालय : काशी हिन्दू विश्वविद्यालय के अध्यक्ष श्री पं० कृष्णमोहन जी शास्त्री का अकथनीय सहयोग प्राप्त हुआ है। उन्हीं के आदेश से प्रस्तुत संस्करण में बालकोपयोगी बहुत से लघु निबन्ध भी बढ़ाये गये हैं। इस परिवर्धित संस्करण से बालकों का अधिक उपकार होगा ऐसा विश्वास है।

विनयावनत--

--सम्पादक

# विषय-प्रवेश:

## व्याकरण-खण्डम्


| | पृ० | | पृ० |
|---|---|---|---|
| माहेश्वरसूत्राणि | १ | कृदन्त-प्रकरणम् | ७३ |
| स्वर-सन्धिः | ६ | कारक-प्रकरणम् | ६२ |
| व्यञ्जन-सन्धिः | १४ | समास-प्रकरणम् | ११२ |
| विसर्ग-सन्धिः | २६ | स्त्रीप्रत्यय-प्रकरणम् | १३३ |
| सुबन्त-प्रकरणम् | ३७ | तद्धित-प्रकरणम् | १४६ |
| तिङन्त-प्रकरणम् | ५४ | संख्यानां गणनाक्रमः | १५६ |


## रचनानुवाद-खण्डम्


| | | | |
|---|---|---|---|
| रचना-प्रकार | १५६ | नामधातु-प्रकरण | १८० |
| काल और पुरुष | १६० | आत्मनेपद-प्रकरण | १८२ |
| कर्तृवाच्य, कर्मवाच्य, भाववाच्य | १६१ | परस्मैपद-प्रकरण | १८७ |
| सकर्मक और अकर्मक | १६३ | उपसर्ग-प्रकरण | १८८ |
| ण्यन्त-प्रकरण | १६६ | सोपसर्ग-धात्वर्थ | १८६ |
| सनन्त-प्रकरण | १७३ | शुद्धाशुद्धि-प्रदर्शन | १६३ |
| यङन्त-प्रकरण | १७७ | शुद्धाऽशुद्धिकारिका | १६४ |


## निबन्ध-खण्डम्


| | | | |
|---|---|---|---|
| १. महर्षिः पाणिनिः | १६६ | १२. देश-भक्तिः, जन्मभूमिः | २०५ |
| २. संस्कृत-भाषा | १६७ | १३. परोपकारः | २०६ |
| ३. विद्या ( शिक्षा ) | १६८ | १४. उद्योगः | २०७ |
| ४. विद्यालयः | ,, | १५. हिमालयः | २०८ |
| ५. स्त्री-शिक्षा | १६६ | १६. शीलं परं भूषणम् | २०६ |
| ६. छात्र-जीवनम् | ,, | १७. ग्राम्यजीवनं नागरजीवनं च | २१० |
| ७. विद्यालयोत्सवः | २०१ | १८. दीपावली | २११ |
| ८. अनुशासनम् | २०२ | १६. सन्तोषः | २१२ |
| ६. व्यायामः | ,, | २०. वसन्तः | ,, |
| १०. सत्सङ्गतिः | २०३ | २१. सन्मित्रम् | २१३ |
| ११. भारतवर्षः | २०४ | २२. वाराणसी ( काशी ) | २१४ |

| | पृ० |
|---|---|
| २३. काश्मीरः | २१५ |
| २४. धनम् | २१६ |
| २५. सत्यम् | २१७ |
| २६. अहिंसा | २१८ |
| १७. सदाचारः | २१९ |
| २८. विज्ञानम् | २२० |
| २९. गीता | २२१ |
| ३०. एकता | २२२ |
| ३१. व्यापारः | २२३ |
| ३२. धूमशकट ( रेल ) यात्रा | २२४ |
| ३३. नौका-विहारः | २२५ |
| ३४. समाचारपत्राणि | २२६ |
| ३५. चलचित्रम् ( सिनेमा ) | ,, |
| ३६. बौध-धर्मः | २२७ |
| ३७. सम्राट् अशोकः | २२८ |
| ३८. महर्षिः दयानन्दः | २२९ |
| ३९. लोकमान्यः तिलकः | २३० |
| ४०. महात्मा गान्धी | २३१ |
| ४१. पं० मदनमोहनमालवीयः | २३२ |
| ४२. सरदारो वल्लभभाईपटेलः | २३३ |
| ४३. देशरत्नो डॉ० राजेन्द्रप्रसादः | ,, |
| ४४. नेताजी सुभाषचन्द्रो वसुः | २३४ |
| ४५. पं० जवाहरलाल नेहरू | २३५ |

हिन्दी निबन्ध

| | |
|---|---|
| १. मिथिला | २३७ |
| २. मैथिली, सीता | २४१ |
| ३. मर्यादापुरुषोत्तम राम | २४२ |
| ४. वा० रामायण | २४३ |
| ५. महाभारत | २४४ |
| ६. भारत | ,, |
| ७. संस्कृत भाषा | २४५ |
| ८. गङ्गा | २४६ |
| ९. वाराणसी, काशी | २४७ |
| १०. महर्षि व्यास | २४८ |
| ११. महर्षि वाल्मीकि | २४९ |
| १२. महर्षि गौतम | २५१ |
| १३. म० गान्धी : स्वतंत्र भारत | २५२ |
| १४. पं० जवाहरलाल नेहरू | २५६ |

परिशिष्टम्

| | |
|---|---|
| १. व्याकरण-लक्षणम् | २५७ |
| २. सूत्र-लक्षणं तद्भेदाश्च | ,, |
| ३. वार्तिक-भाष्य-व्याख्यान-लक्ष० | ,, |
| ४. आचार्य-उपाध्याय-शिष्य-लक्ष० | ,, |
| ५. पण्डित-लक्षणम् | ,, |
| ६. हास्याय | २५८ |
| ७. कूटानि | २६० |
| ८. क्रियागुप्तम् | २६१ |
| ९. प्रहेलिका | २६२ |
| १०. सुभाषितावली | २६३ |
| ११. विद्या-प्रशंसा | २६४ |
| १२. पुस्तकसंरक्षणप्रकारः | २६५ |
| १३. नीतिचन्द्रिका | २६६ |
| १४. छात्र-प्रतिज्ञा | २७३ |
| १५. प्रश्नपत्राणि | २७५ |
| १६. ल्यप्प्रत्ययान्तशब्दार्थाः | २८४ |
| १७. तद्धितप्रत्ययान्तशब्दार्थाः | २८६ |
| १८. समस्तशब्दार्थाः | २८८ |
| १९. व्यावहारिकः क्रियाकोशः | २८९ |
| २०. व्यावहारिकः शब्दकोशः | २९२ |
| २१. व्यावहारिका अव्ययशब्दाः | २९८ |




॥ श्रीः ॥

# संस्कृत-व्याकरणम्



## उद्बोधः

सरस्वती श्रुतिमहती महीयतां
ततः स्रुता शुचि-सुधा निपीयताम् ।
सदा मतिः शुभचरिते विधीयतां
रतिः परा परमगुरौ प्रचीयताम् ॥

## माहेश्वर-सूत्राणि

अ इ उ ण् ॥ १ ॥ ऋ ऌ क् ॥ २ ॥ ए ओ ङ् ॥ ३ ॥
ऐ औ च् ॥ ४ ॥ ह य व र ट् ॥ ५ ॥ ल ण् । ६ ॥
ञ म ङ ण न म् ॥ ७ ॥ झ भ ञ् ॥ ८ ॥ घ ढ ध ष् ॥ ९ ॥
ज ब ग ड द श् ॥ १० ॥ ख फ छ ठ थ च ट त व् ॥ ११ ॥
क प य् ॥ १२ ॥ श ष स र् ॥ १३ ॥ ह ल् ॥ १४ ॥

इति चतुर्दश सूत्राणि माहेश्वर-सूत्राणि[1]। एषाम् अन्त्यवर्णाः ( ण्-क्-ङादयः )[2] इत्संज्ञका भवन्ति।

'ह य व र ट्' इत्यारभ्य 'ह ल्' सूत्रपर्यन्तं हकारादिषु उक्तः अकारः उच्चारणार्थः। प्रत्याहारविधायकसूत्रम्—

**'आदिरन्त्येन सहेता'**

अन्त्येनेता सहितः आदिः मध्यगानां स्वस्य च संज्ञा स्यात्! यथा—'अच्' इत्यत्र चकारः इत्संज्ञकः, तेन सह आदिः अकारः, मध्यगानाम् ( इ-उ ऋ-लृ-ए-ओ-औ-वर्णानाम् ) स्वस्य च ( स्वशब्दस्य प्रधानवाचकतया, अकारस्यापि ) संज्ञकः ( बोधकः ) भवति। तेन 'अच्' इति कथनेन अ-इ,उ ऋ-लृ-ए-ओ-ऐ-औ-वर्णानां बोधो भवति।

---

१. ये चतुर्दश माहेश्वर सूत्र अण्,अक् अच् इत्यादि प्रत्याहारसिद्धि के लिए हैं। इन चतुर्दश सूत्रों के आधार पर ही महर्षि पाणिनि ने समस्त व्याकरण की सभी बातें सरल रूपेण संक्षेप में कही हैं।

आचार्य पाणिनि ने अपनी तपश्चर्या से आशुतोष भगवान् शंकर के अतिशय प्रिय डमरू के शब्दों से इन सूत्रों को उपलब्ध किया था, जैसा कि नन्दिकेश्वर-विरचित काशिका में लिखा है :—

'नृत्तावसाने नटराजराजो ननाद ढक्कां नव-पञ्च-वारम्।
उद्धर्तुकामः सनकादिसिद्धनेतद्विमर्शे शिवसूत्रजालम् ॥'

२. उपदेश अवस्था में जो अन्त्य हल् ( व्यञ्जन ) वर्ण उनकी इत्संज्ञा हो जाती है। ( देखें 'हलन्त्यम्' सू०। )

नोट—(१) आद्य ( प्रथम ) उच्चारण को 'उपदेश' कहते हैं। व्याकरण शास्त्र के प्रवर्तक पाणिनि, कात्यायान और पतञ्जलि का जो आद्योच्चारण है उसी का नाम 'उपदेश' है—

'धातु-सूत्र-गणोणादि-वाक्य-लिङ्गानुशासनम्।
आगम-प्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥'

( २ ) उपर्युक्त प्रत्याहारों में एक 'र' ( र, ल ) प्रत्याहार भी अधिक है। दे० 'उरण रपरः' सू०—देवर्षिः, तवल्कारः।

एवम् अल्, अक्, हल्–आदिप्रत्याहारेष्वपि बोध्यम्। अन्त्यवर्णानाम् इत्संज्ञकत्वेन 'तस्य लोपः' इत्यनेन लोपविधानात् प्रत्याहारे तेषां ग्रहणं नेति।

## माहेश्वरसूत्र-प्रत्याहारः

स्यादेको ङ-ञ-ण-व-टैः, षेण द्वौ, त्रय इह क-ण मैश्च।
चत्वारश्च च-याभ्यां, पञ्च रेफेण, श-लाभ्यां षट्॥

अक्—अ, इ, उ, ऋ, लृ।

अच्—अ, इ, उ, ऋ, लृ ए ओ, ऐ, औ।

अण्—अ, इ उ।

अट्—अ, इ, उ, ऋ, लृ, ए, ओ, ऐ, औ, ह, य, व, र।

अण्—अ, इ, उ, ऋ, लृ, ए, ओ, ऐ, औ, ह, य, व, र, ल।

अम्—अ, इ, उ, ऋ, लृ, ए, ओ, ऐ, औ, ह, य, व, र, ल, ञ, म, ङ, ण, न।

अल्—अ, इ, उ, ऋ, लृ, ए, ओ, ऐ, औ, ह य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ थ, च, ट, त, क, प, श, ष, स, ह।

अश्—अ, इ, उ, ऋ, लृ, ए, ओ, ऐ, औ, ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द।

इक्—इ, उ, ऋ, लृ।

इच्—इ, उ, ऋ लृ, ए, ओ, ऐ, औ।

इण्—इ, उ, ऋ, लृ, ए, ओ, ऐ, औ, ह, य, व, र, ल,

उक्—उ, ऋ, लृ।

एङ्—ए, ओ।

एच्—ए, ओ, ऐ, औ।

ऐच्—ऐ औ।

खय्—ख, फ, छ, ठ, थ, च, ट, त, क, प।

खर्—ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स।

ङम्—ङ, ण, न।

चय्—च, ट, त, क, प।

चर्—च, ट, त, क, प, श, ष, स।

छव्—छ, ठ, थ, च, ट, त।

जश्—ज, ब, ग, ड, द।

झय्—झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प।

झर्—झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स।

झल्—झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह।

झश्—झ, भ, घ, ढ, ध, ज, ब, ग, ड, द।

झष्—झ, भ, घ, ढ, ध।

बश्—ब, ग, ड, द।

भष्—भ, घ, ढ, ध।

मय्—म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प।

यञ्—य, व, र, ल, ञ, म, ङ, ण, न, झ, भ।

यण्—य, व, र, ल।

यम्—य, व, र, ल, ञ, म, ङ, ण, न।

यर्—य, व, र, ल, ञ, म, ञ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स।

रल्—र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह।

वल्—व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह।

वश्—व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ङ, द।

शर्—श, ष, स।

शल्—श, ष, स, ह।

हल्—ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द, ख, फ, छ, ठ, थ, च, ट, त, क, प, श, ष, स, ह।

हश्—ह, य, व, र, ल, ञ, म, ङ, ण, न, झ, भ, घ, ढ, ध, ज, ब, ग, ड, द।

## वर्णोद्भवस्थानज्ञापक चक्र

| कंठ | तालु | मूर्धा | दन्त | ओष्ठ | नासिका | कं.ता. | कं.ओ. | दं.ओ. | जि.मू. | नासिका |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | इ | ऋ | ऌ | उ | ञ | ए | ओ | व | ≍क | |
| क | च | ट | त | प | म | ऐ | औ | | | |
| ख | छ | ठ | थ | फ | ङ | | | | ≍ख | |
| ग | ज | ड | द | ब | ण | | | | | अनुस्वार |
| घ | झ | ढ | ध | भ | न | | | | | |
| ङ | ञ | ण | न | म | | | | | | |
| ह | य | र | ल | ≍प | | | | | | |
| : | श | ष | स | ≍फ | | | | | | |

## आभ्यन्तर और बाह्यप्रयत्नज्ञापक चक्र

| आभ्यन्तर-प्रयत्न | स्पृष्ट | | | ईषत्स्पृष्ट | ईषद्विवृत | | विवृत | संवृत |
|---|---|---|---|---|---|---|---|---|
| संज्ञा | स्पर्श | | | अन्तःस्थ | ऊष्मा | | स्वर उदात्त, अनुदात्त, स्वरित | |
| व्यञ्जन, स्वर | क ख<br>प फ<br>च छ<br>ट ठ<br>त थ | ग ङ<br>ब म<br>ज ञ<br>ड ण<br>द न | घ<br>भ<br>झ<br>ढ<br>ध | य<br>व<br>र<br>ल | श<br>ष<br>स | ह | अ ई ए<br>उ ओ<br>ऋ ऐ<br>ऌ औ | प्रयोग में ह्रस्व अ |
| बाह्यप्रयत्न | अ प्रा म प्रा.<br>विवार<br>श्वास<br>अघोष | अल्प.प्रा<br>संवार<br>नाद<br>घोष | म प्रा.<br>संवार<br>नाद<br>घोष | अल्प.<br>संवार<br>नाद<br>घोष | म. प्रा<br>विवार<br>श्वास<br>अघोष | म. प्रा.<br>सं<br>ना.<br>घो. | अल्पप्राण<br>संवार<br>नाद<br>घोष | अल्प.<br>संवार<br>नाद<br>घोष |

# स्वर-सन्धिः

( पूर्वान्त्यवर्णस्य परादिवर्णस्य उभयोर्वा विकाराः सन्धिकार्याणि। विकारश्च आदेशः, आगमः, द्वित्वम्, लोपः–इत्येतेषाम् अन्यतम एव[१]। ( यत्र स्वरो विकार्यः स स्वरसन्धिः[२] । )

## सन्धि-व्यवस्था

'संहितैकपदे नित्या, नित्या धातूपसर्गयोः ।
नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते[३] ॥'

## ( १ ) इको यणचि

इकः स्थाने यण् स्याद् अचि संहितायाम् ।

( वर्णानामतिशयितः सन्निधिः संहिता । अर्थाद् मध्ये विच्छेदं विना वर्णानां साधारणरूपेण उच्चारणं संहिता । इति । )

## उपनियमाः

१. इवर्णं ( इ, ई ) भिन्ने स्वरवर्णे परे इवर्णस्य स्थाने 'य्' भवति[४] ।
२. उवर्णं ( उ, ऊ ) भिन्ने स्वरवर्णे परे उवर्णस्य स्थाने 'व्' भवति[५] ।

---

१. दो या दो से अधिक वर्ण परस्पर अत्यन्त निकटवर्ती होने से जो मिल जाते हैं, उस मिलन का नाम सन्धि है ।

२. स्वर वर्ण के साथ स्वर वर्ण की जो सन्धि होती है, उसे 'स्वर-सन्धि' कहते हैं ।

३. एक पद में, धातु और उपसर्ग में तथा समास में सन्धि नित्य होती है, किन्तु वाक्य में वक्ता की इच्छा पर ही सन्धि होती है ।

४. इवर्ण–इ अथवा ई के बाद इवर्णभिन्न स्वर वर्ण रहे तो इवर्ण के स्थान में 'य्' होता है ।

५. उवर्ण–उ अथवा ऊ के बाद उवर्णभिन्न स्वर वर्ण रहे तो उवर्ण के स्थान में 'व्' होता है ।

३. ऋवर्णं ( ऋ, ॠ ) भिन्ने स्वरवर्णे परे ऋवर्णस्य स्थाने 'र्' भवति[१]।
४. लृवर्णं ( लृ ) भिन्ने स्वरवर्णे परे लृवर्णस्य स्थाने 'ल्' भवति[२]।

## उदाहरण-माला

यदि + अपि = यद्यपि ।
दधि + आनय = दध्यानय ।
देवी + अर्चा = देव्यर्चा ।
सती + आगता = सत्यागता ।
मधु + अरिः = मध्वरिः ।
लघु + आचारः = लघ्वाचारः ।
वधू + अन्वेषणम् = वध्वन्वेषणम् ।
भू + आदिः = भ्वादिः ।
पितृ + अर्थम् = पित्रर्थम् ।
मातृ + आकृतिः = मात्राकृतिः ।
लृ + अर्थम् = लर्थम् ।
लृ + आकृतिः = लाकृतिः । इत्यादि[३]।

## अभ्यासार्थं प्रश्नाः

( क ) सन्धिं कुरु—दधि + अत्र । साधु + आगमनम् । मधु + इच्छति । मुनि + उत्सुकता । भ्रातृ + अनुरोधः ।

( ख ) शुद्धं कुरु—दध्यिदम् । कव्यीश्वरः । मह्यीशः । भान्वुदयः । वध्वूत्सवः । दध्यौषधिः । नद्युर्मिः । प्रत्यैकम् । अभ्यूदयः । देव्यांशः । मात्रानुमतिः ।

( ग ) उपनियमानां तृतीयोपनियमस्वरूपं सोदाहरणं प्रदर्श्यताम् ।

## ( २ ) आद्गुणः

अवर्णाद् अचि परे पूर्व-परयोः एको गुणादेशः स्यात् ।

---

१. ऋवर्ण–ऋ अथवा ॠ के बाद ऋवर्णभिन्न स्वर वर्ण रहे तो ऋवर्ण के स्थान में 'र्' होता है ।

२. लृवर्ण–'लृ' के बाद लृभिन्न स्वर वर्ण रहे तो लृ के स्थान में 'ल्' होता है ।

३. ( १ ) मध्वपि । अभ्युदयः । न्यूनता । मुन्यृषभः । प्रत्येकम् । लक्ष्म्यैश्वर्यम् । दध्योदनः । अस्योदास्यम् । प्रत्यंशः । सुध्युपास्यः । नद्यूर्मिः । बल्यृषभः । गोप्येषा । मत्यैक्यम् । देव्योजः । सख्यौपम्यम् । गौर्यंशः । ( २ ) मध्विदम् । साध्वीहितम् । मध्वृते । मध्वॢतः । अन्वैक्षिष्ट । साध्वोकः । ददात्वौषधम् । तन्विन्द्रियम् । वध्वीक्षणम् । सरय्वेका । तन्वैश्वर्यम् । सरय्वोघः । ( ३ ) पित्रिच्छा । पित्रीहितम् । मात्रुदकम् । पित्रूनः । धात्रेवम् । पित्रैश्वर्यम् । जामात्रोकः । मात्रौदार्यम् । गम्लाकृतिः । इत्यादि ।

## उपनियमाः

१. पूर्व-परयोः अवर्ण-इवर्णयोः स्थाने 'ए' भवति[1]।
२. पूर्व-परयोः अवर्ण-उवर्णयोः स्थाने 'ओ' भवति[2]।
३. पूर्व-परयोः अवर्ण-ऋवर्णयोः स्थाने 'अर्' भवति[3]।
४. पूर्व-परयोः अवर्ण-ऌकारयोः स्थाने 'अल्' भवति[4]।

---

१. अवर्ण ( अ या आ ) के बाद इवर्ण ( इ या ई ) रहे तो दोनों मिलकर 'ए' होता है।

२. अवर्ण (अ या आ) के बाद उवर्ण ( उ या ऊ ) रहे तो दोनों मिलकर 'ओ' होता है।

३. अवर्ण ( अ या आ ) के बाद ऋवर्ण ( ऋ या ॠ ) रहे तो दोनों मिलकर 'अर्' होता है।

४. अवर्ण ( अ या आ ) के बाद ऌकार रहे तो दोनों मिलकर 'अल्' होता है।

नोट—निम्न ( क ) अंकित स्थलों में पररूप से और (ख) अंकित स्थलों में वृद्धि से गुण का बाध हो जाता है।

( क ) हल + ईषा = हलीषा। लाङ्गल + ईषा = लाङ्गलीषा। ( दे० 'शकन्ध्वादिषु पररूपं वाच्यम्' वा० )।

(ख) स्व + ईरः = स्वैरः। स्व + इरी = स्वैरी (दे० 'स्वादीरेरिणोः' सू०)। अक्ष + ऊहिनी = अक्षौहिणी। (दे० 'अक्षादूहिन्यामुपसंख्यानम्' सू०) प्र + ऊहः = प्रौहः। प्र = ऊढः = प्रौढः। ( दे० 'प्रादूहोढोढ्येषैष्येषु' सू०) प्रष्ठ + ऊहः = प्रष्ठौहः ( दे० 'एत्येधत्यूठ्सु' सू० )। सुख + ऋतः = सुखार्तः। दुःख + ऋतः = दुःखार्तः। तृष्णा + ऋतः + तृष्णार्तः। ( दे० 'ऋते च तृतीयासमासे' वा० )। प्र + ऋणम्। प्रार्णम्। वत्सतर + ऋणम् = वत्सतरार्णम्। कम्बल + ऋणम् = कम्बलार्णम्। वसन + ऋणम् = वसनार्णम्। ऋण + ऋणम् + ऋणार्णम्। दश + ऋणम् = दशार्णम्। ( दे० 'प्रवत्सतरकम्बलवसनार्णदशानामृणे' वा० ) प्र + ऋच्छति = प्रार्च्छति। उप + ऋच्छति = उपार्च्छति। प्र + ऋणोति + प्रार्णोति। उप + ऋणोति = उपार्णोति। प्र + ऋच्छन् = प्रार्च्छन्। उप + ऋच्छन् = उपार्च्छन्। ( दे० 'उपसर्गादृति धातौ' सू० )।

## उदाहरण-माला

१. उप + इन्द्रः = उपेन्द्रः । रमा + ईशः = रमेशः ।
२. सूर्य + उदयः = सूर्योदयः । प्रसाद + ऊर्ध्वम् = प्रासादोर्ध्वम् ।
३. देव + ऋषिः = देवर्षिः । उप + ऋकारीयति = उपर्कारीयति ।
४. तव + लृकारः = तवल्कारः । आ + लृकारः = अल्कारः ।

## अभ्यासार्थं प्रश्नाः

(क) सन्धिं कुरु—देव + इन्द्रः । मिथिला + ईश्वरः । सर्व + उदयः । महा + उपाध्यायः । शुभ्र + ऋषिः । राज + ऋषिः ।

(ख) शुद्धं कुरु—दिगेशः । स्वेरः । उपरोक्तम् । अक्षोहिणी । उपच्छैति । प्रेष्यः । प्रोढः । यमुनौदकम् । शिवौरुः ।

(ग) पृथग्निर्दिष्टानां चतुर्णामुपनियमानां स्वरूपमेकेनैवोपनियमेन प्रदर्शयन्तु ।

## (३।) वृद्धिरेचि

अवर्णाद् एचि वृद्धिः एकादेशः स्यात् ।

### उपनियमौ

१. अकाराद् आकाराद् वा परे एकारे ऐकारे वा सति पूर्व-परयोः स्थाने 'ऐ' भवति[1] ।

२. अकाराद् आकाराद् वा परे ओकारे औकारे वा सति पूर्व-परयोः स्थाने 'औ' भवति[2] ।

---

१. अकार अथवा आकार के बाद यदि ए अथवा ऐ रहे तो दोनों मिलकर 'ऐ' होता है ।

२. अकार अथवा आकार के बाद ओ अथवा औ रहे तो दोनों मिलकर 'औ' होता है ।

नोट—यदि अवर्णान्त उपसर्ग से पर एकारादि या ओकारादि धातुरूप रहे तो पररूप (दोनों मिलकर एक) हो जाता है । यथा—

प्र + एजते = प्रेजते । परा + इलयति = परेलयति ।
उप + ओषति = उपोषति । ( दे० 'एङि पररूपम्' सू० )

## उदाहरण-माला

१. कृष्ण + एकत्वम् = कृष्णैकत्वम् । सदा + एव = सदैव ।
देव + ऐश्वर्यम् = देवैश्वर्यम् । यमुना + ऐक्यम् = यमुनैक्यम् ।
२. देव + ओकः = देवौकः[1] । गङ्गा + ओघः = गङ्गौघः ।
कृष्ण + औत्कण्ठ्यम् = कृष्णौत्कण्ठ्यम् ।

## अभ्यासार्थं प्रश्नाः

( क ) सन्धिं कुरु—जन + एकता । जल + ओघः । चित्त + औदार्यम् ।
सदा + एव । अपक्व + ओदनः । गत + औत्सुक्यम् ।
( ख ) सन्धिविच्छेदं कुरु—लोकैकमत्यम् । शुद्धैरावती । तवैश्वर्यम् ।
तवौदनः । पापौघः । महौचित्यम् ।
( ग ) शुद्धं कुरु—प्रैजते । उपेति । तवेव । ममेश्वर्यम् । महोकः । पीडोषधिः ।
( घ ) उपनियमयोः स्वरूपमेकेनैवोपनियमेन राष्ट्रभाषायां प्रदर्श्य 'उपोषति' शिवायोनमः इत्यादौ वृद्धिः कथन्नेति प्रतिपाद्यताम् ।

## ( ४ ) अकः सवर्णे दीर्घः

अकः सवर्णे अचि परे दीर्घः एकादेशः स्यात् ।

## उपनियमाः

१. पूर्व-परयोः अवर्ण-अवर्णयोः स्थाने 'आ' भवति[2] ।
२. पूर्व-परयोः इवर्ण-इवर्णयोः स्थाने 'ई' भवति[3] ।
३. पूर्व-परयोः उवर्ण-उवर्णयोः स्थाने 'ऊ' भवति[4] ।
४. पूर्व-परयोः ऋवर्ण-ऋवर्णयोः स्थाने 'ॠ' भवति[5] ।

---

१. किन्तु—शिव + ओम् = शिवोम् । ( दे० 'ओमाङोश्च' सू० )
२. अवर्ण—अ अथवा आ के बाद अ या आ रहे तो दोनों मिलकर 'आ' हो ।
३. इवर्ण—इ अथवा ई के बाद इ या ई रहे तो ,, ,, 'ई' हो ।
४. उवर्ण—उ अथवा ऊ के बाद उ या ऊ रहे तो ,, ,, 'ऊ' हो ।
५. ऋवर्ण—ऋ अथवा ॠ के बाद ऋ या ॠ रहे तो ,, 'ॠ' हो ।

५. पूर्व-परयोः लृवर्ण-लृवर्णयोः स्थाने 'ॡ' भवति[1] ।

## उदाहरण-माला

१. दैत्य + अरिः = दैत्यारिः । श्रद्धा + अस्ति = श्रद्धाऽस्ति ।
कमल + आकरः = कमलाकरः । विद्या + आलयः = विद्यालयः ।
२. फणि + इन्द्रः = फणीन्द्रः । देवी + इच्छा = देवीच्छा ।
कवि + ईश्वरः = कवीश्वरः । श्री + ईशः = श्रीशः ।
३. भानु + उदयः = भानूदयः । वधू + उत्सवः = वधूत्सवः ।
लघु + ऊर्मिः = लघूर्मिः । भू + ऊर्ध्वम् = भूर्ध्वम् ।
४. होतृ + ऋकारः = होतॄकारः । ५. गम्लृ + लृकारः = गम्ॡकारः ।

## अभ्यासार्थं प्रश्नाः

(क) सन्धिं कुरु—शश + अङ्कः । साधु + उत्तम् । रत्न + आकरः । महा + आशयः । प्रति + इक्षा । कवि + ईश्वरः । स्वयम्भु + उदयः । पितृ + ऋणम् ।

(ख) सन्धिविच्छेदं कुरु—कल्याणार्थम् । देवागारम् । मुनीश्वरः । विधूदयः । वसन्तागमनम् । मातॄणम् । परमाराध्यः ।

(ग) शुद्धं कुरु—कल्याणर्थम् । कव्यिन्द्रः । देव्यिच्छा । गौर्यीशः । वध्वुत्सवः । लव्वूर्मिः । मृताण्डः ।

(घ) उपनियमानां यथेच्छम् उपनियमस्वरूपत्रयं स्वगिरा सोदाहरणं प्रदर्शयन्तु । अन्तिमस्तु न हेयः ।

---

१. लृवर्ण—लृ के बाद लृ अथवा ऋ या ॠ रहे तो दोनों मिलकर 'ॡ' हो ।

नोट—कहीं अ के बाद अ रहने से पररूप अर्थात् दोनों मिलकर एक हो जाता है । (दे० पृ० ८ का नोट)। यथा—शक + अन्धुः = शकन्धुः । सम + अर्थः = समर्थः । मृत + अण्डः = मृतण्डः । मार्त + अण्डः = मार्तण्डः । (दे० 'शकन्ध्वादिषु पररूपं वाच्यम्' वा०) ।

## ( ५ ) एचोऽयवायावः

स्वरवर्णे परे एचः क्रमाद्—अय् , अव् , आय् , आव् , एते स्युः[१] ।

### उपनियमाः

१. एकारस्य स्थाने 'अय्' भवति स्वरवर्णे परे ।
२. ऐकारस्य स्थाने 'आय्' भवति स्वरवर्णे परे ।
३. ओकारस्य स्थाने 'अव्' भवति स्वरवर्णे परे ।
४. औकारस्य स्थाने 'आव्' भवति स्वरवर्णे परे ।

### उदाहरण-माला

| | |
|---|---|
| १. शे + अनम् = शयनम्[२] | घटे + इता = घटयिता । |
| शे + आते = शयाते | मृगे + उः = मृगयुः । |
| २. विनै + अकः = विनायकः | शै + इतः = शायितः । |
| रै + ईशः = रायीशः । | सखै + औ = सखायौ । |
| ३. भो + अनम् = भवनम् । | गो + आम् + गवाम् । |
| पो + इत्रम् = पवित्रम् । | अजुहो + उः = अजुहवुः । |

१. स्वर वर्ण के परे रहते 'ए' के स्थान में 'अय्', 'ऐ' के स्थान में 'आय्' 'ओ' के स्थान में 'अव्' तथा 'औ' के स्थान में 'आव' होता है ।

नोट—अयादि होने पर अयादि का अवर्ण पूर्ण वर्ण से और य् अथवा व् पर वर्ण से मिल जाता है ।

२. 'शयनम्' इत्यादि पदमध्यस्थ 'एच्' के उदाहरण हैं । पदान्त 'एङ्' (ए, ओ ) के बाद ह्रस्व अकार रहने पर तो पूर्वरूप ही हो जाता है । यथा— हरे + अव = हरेऽव । गुरो + अत्र = गुरोऽत्र । ( दे० एङः पदान्तादति' सू० )

नोट—पदान्त 'एच्' के स्थान में होने वाले अयादि के यकार तथा वकार विकल्प से लोप हो जाता है और लोप पक्ष में पुनः सन्धि नहीं होती । यथा— हरे + इह = हर इह, हरयिह । इत्यादि । ( दे० 'लोपः शाकल्यस्य' सू० )

४. पौ + अकः = पावकः । भौ + उकः = भावुकः । इत्यादि[1] ।

## अभ्यासार्थं प्रश्नाः

( क ) सन्धिं कुरु —हरे + ए । शे + ऐ । वने + ओः । शै + औ ।

( ख ) सन्धिविच्छेदं कुरु—भवति । विचया । शयीरन् । गृहयृषिः । शायितः । भवनम् । गावः ।

( ग ) शुद्धं कुरु —रयीशः । गवक्षः । गविन्द्रः । गवीशः । गवायुतिः ।

( घ ) उपनियमानां स्वरूपमेकैकेनैवोपनियमेन राष्ट्रभाषायां सोदाहरणं प्रदर्शयन्तु ।

---

१. यथा-( क )जे + अति = जयति । रमे + आ=रमया । शे + इतम्= शयितम् । शे + ईरन् = शयीरन । मृगे + उः=मृगयुः । मे + ऊरः=मयूरः । गृहे + ऋत्विकः = गृहयृत्विकः । वने + लृतकः = वनयॢतकः । हरे + ए=हरये ।

( ख ) नै + अकः=नायकः । रै + आम्=रायाम् । शै + इतः=शायितः ऐ + उः=आयुः । रै + ए=राये । रै + ओः=रायोः ।

( ग ) यो + अनः=यवनः । गो + आ=गवा । भो + इता = भविता । गो + अवे=गवे । गो + ओः=अवोः । इत्यादि ।

नोट-(१)पदान्त गोशब्दावयव ओकार के स्थान पर अदन्त 'अव' आदेश भी होता है, यथा—गो + इशः=गवा + ईशः=गवेशः । गो + अक्षः=गव + अक्षः= गवाक्षः । गो + इन्द्रः=गव + इन्द्रः=गवेन्द्रः । इत्यादि । (दे० 'अवङ्स्फोटायनस्य' तथा 'इन्द्रे च' सू० ।

(२) यकारादि प्रत्यय परे रहते भी गो शब्द के ओकार के स्थानमें 'अव्' होता है । यथा-गो + यूतिः –गव्यूतिः । इत्यादि (दे० 'वान्तो यि प्रत्यये' सू० )

# स्वरसन्धि-निषेध-विमर्श

( १ ) ओकारान्त[1] अव्यय तथा एकस्वरमात्र अव्यय की सन्धि नहीं होती[2] यथा—( क ) अहो + अच्युत = अहो अच्युत । ( ख ) आ + एवम् = आ एवम् ।

नोट—सीमा, व्याप्ति और ईषत् अर्थ बोध होने या क्रिया के साथ योग होने पर एकाक्षरी 'आ' अव्यय की सन्धि होती है यथा--

१. सीमा ( मर्यादा )आ + अध्ययनात् = आध्ययनात् ।

२. व्याप्ति अभिविधि=मर्यादा का प्रभेद –आ + एकदेशात्=ऐकदेशात् ।

३. ईषत् ( किंचित् ) अर्थ में--आ + उष्णम् = ओष्णम् ।

४. क्रिया के योग में—आ + इहि = एहि ।

( २ ) द्विवचनान्त ई, ऊ, ए, के वाद कोई भी स्वर वर्ण रहने पर सन्धि नहीं होती[3] । यथा--१. कवी + इमौ = कवी इमौ । २. दाधू + इमौ = साधू इमौ । ३. वालिके इमे = बालिके इमे । इत्यादि ।

( ३ ) प्लुत[4] स्वर की सन्धि नहीं होती । यथा--एहि कृष्ण ३ ! अत्र ।

( ४ ) ईकारान्त और ऊकारान्त अदस् शव्द की पदों को सन्धि नहीं होती[5] । (क) अमी=अर्भका:=अमी अर्भका: । अमू + अत्त: = अमू अत्त: । इत्यादि ।

## अभ्यासार्थं प्रश्नाः

( क ) सन्धि कुरु—( १ ) अहो + अम्ब । अहो + आश्चर्यम् । मिथो + आगच्छति । आ + उच्चारय । इ + इन्दुः । उ + उमा ।

(२) अग्नी + इमौ । रामलक्ष्मणौ + अधीयाते । भानू + इमौ । धेनू + इमे ।

(ख) शुद्धं कुरु—अहोऽत्रागच्छ- धेन्वानय । वालिकेऽत्त: साध्वजीयाते । रामेहि अन्वयागच्छत: । बाहूच्चलितौ । सुध्यागच्छत: । इति स्वर-सन्धिः ।

---

१. दे० 'ओत' सू० । २. दे० 'निपात एकाजनाङ्' सू० ।

३. दे० 'ईदूदेद्द्विवचनं प्रगृह्यम्' तथा 'प्लुतप्रगृह्या अचि नित्यम्' सू० ।

४. दूर से आह्वान ( वुलाने ), गान या रोदन के शब्द को 'प्लुत' कहते हैं। दे० 'दूराद्धूते च' सू० । ५. दे० 'अदसो मात्' सू० ।

# व्यञ्जन सन्धिः

यत्र व्यञ्जनो विकार्यः स व्यञ्जनसन्धिः[1]।
विसर्गसन्धिस्तु हल्सन्ध्यन्तर्गतोऽपि अग्रे वक्ष्यते।

## ( १ ) स्तोश्चुना श्चुः

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः[2]।

( अत्र सूत्रे स्थान्यादेशयोः एव यथासंख्यम्, न तु योगस्य। ततश्च सकारस्य तवर्गस्य च शकारेण चवर्गेण वा यथासम्भवे योगे सति—सकारस्य शकारः, तकारस्य चकारः, दकारस्य जकारः, नकारस्य ञकारः, इत्याद्येव श्चुत्वमिह भवति)

### उपनियमाः

१ चकारे छकारे शकारे वा परे पदान्तस्य सस्य शो भवति[3]।
२. चकारे छकारे वा परे तकारस्य दकारस्य च स्थाने चकारो भवसि[4]।
३ जकारे झकारे वा परे तकारस्य दकारस्य च स्थाने जकारो भवति[5]।
४. जकारे झकारे च परे, चकाराद् जकाराद् वा परतः नस्य ञो भवति[6]।

---

१. व्यञ्जन वर्ण के साथ स्वर या व्यञ्जन वर्ण की सन्धि को 'व्यञ्जनसन्धि' कहते हैं।

२ सकार-तवर्ग के स्थान में शकार या चवर्ग का ( पूर्व या पर ) योग रहने पर 'स' के स्थान में 'श' और तवर्ग के स्थान में चवर्ग हो जाता है।

नोट—शकार से पर तवर्ग को श्चुत्व नहीं होता। यथा—विश् + नः = विश्नः। प्रश् + नः = प्रश्नः। दे० 'शात्' सू०।

३. चकार, छकार या शकार के परे दन्त्य सकार के स्थान में तालव्य शकार होता है।

४. चकार अथवा छकार के परे तकार या दकार के स्थान में जकार होता है।

५. चकार अथवा झकार के परे तकार या दकार के स्थान में जकार होता है।

६. जकार या झकार के परे अथवा चकार या जकार के बाद नकार के स्थान में ञकार होता है।

## उदाहरण-माला

१. तपस् + चिनोति = तपश्चिनोति। तरोस् + छाया = तरोश्छाया। हरिस् + शेते — हरिश्शेते (हरिः शेते[1])। बालस् + शोभते = बालश्शोभते।

२. सत् + चरित्रम् = सच्चरित्रम्। शरत् + छटा = शरच्छटा। तद् + छविः = तच्छविः।

३. उत् + ज्वलनम् = उज्ज्वलनम्। ईषद् + ज्वलनम् = ईषज्ज्वलनम्। तत् + झणत्कारः = तज्झणत्कारः।

४. श्रीमान् + जयतु = श्रीमाञ्जयतु। गच्छन् + झटिति = गच्छञ्झटिति। याच् + ना = याच्ञा। यज् + नः = यज्ञः। इत्यादि।[2]

## अभ्यासार्थं प्रश्नाः

( क ) सन्धिं कुरु—यशस् + चिनोति। भवत् + छलनम्। उत् + ज्वलः। विपद् + जालम्। तद् + झणत्कारः। महान् + जयः। याच् + ना।

( ख ) सन्धिविच्छेदं कुरु— रामश्चिनोति। मेघश्छन्नः। शिशुश्शेते।

( ग ) शुद्धं कुरु—बालो चलति। चन्द्रच्छन्नः। वृक्षच्छिद्यते। शिष्यस्शेते।

## ( २ ) ष्टुना ष्टुः

सकार-तवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गादेशौ स्तः[3]।

( अत्र सूत्रेऽपि स्थान्यादेशयोरेव यथासंख्यं न तु योगस्य। तेन सकारस्य षकारः, तकारस्य टकारः, थकारस्य ठकारः, दकारस्य डकारः, नकारस्य णकारः, इत्याद्येव ष्टुत्वं निष्पन्नं भवति। )

---

१. दे० 'वा शरि' सू० ( विसर्गसन्धि में )।

२. यथा—पूर्णश्चन्द्रः। रवेश्छविः। धावितश्छागः। उत्फुल्लश्शिशुः। एतच्चित्रम्।

३. सकार-तवर्ग के स्थान में षकार-टवर्ग का ( पूर्व या पर में ) योग रहने पर 'स' के स्थान में 'ष' और तवर्ग के स्थान में टवर्ग हो जाता है।

## उपनियमाः

१. टकारे ठकारे षकारे वा परे सस्य स्थाने षो भवति[1]।
२. टकारे ठकारे वा परे तस्य दस्य च स्थाने टो भवति[2]।
३. डकारे ढकारे वा परे तस्य दस्य च स्थाने डो भवति[3]।
४. ठकारे डकारे ढकारे वा परे पदान्तस्य नस्य णो भवति[4]।
५. षकारात् परस्य तस्य स्थाने टः, थस्य च स्थाने ठो भवति[5]।

## उदाहरण-माला

१. धनुस् + टङ्कारः = धनुष्टङ्कारः। मग्नस् + ठक्कुरः = मग्नष्ठक्कुरः। रामस् + षष्ठः = रामष्षष्ठः।
२. तत् + टीका = तट्टीका। सत् + ठक्कुरः = सट्ठक्कुरः
३. उत् + डीनः = उड्डीनः। त्वत् + ढक्का = त्वड्ढक्का।
४. भवान् + ठक्कुरः = भवाण्ठक्कुरः महान् + डामरः = महाण्डामरः। चक्रिन् + ढौकसे = चिक्रण्ढौकसे।
५. पृष् + तम् = पृष्ठम्। अधिष् + थाता = अधिष्ठाता।

## अभ्यासार्थं प्रश्नाः

(क) सन्धि कुरु—शिशुस् + टीकते। स्थिरस् + ठक्कुरः। किश्चित् + टीकते। तद् + डिण्डिमः। जगद् + ढक्का। महान् + डमरुः। नष् + तम्
(ख) सन्धिविच्छेदं कुरु—मनष्टीका। देवष्षष्ठः। अग्निचिट्टीकते। एतट्टक्कुरः। त्वड्डमरुः। एतड्ढक्का। श्रीमण्ढौकसे। हृष्टः। पुष्टः। षष्ठः।
(ग) शुद्धं कुरु—रामस्टीकते। चत्वारश्षट्पदाः। त्वतट्टीका। त्वत्डमरुः।

---

१. टकार, ठकार अथवा षकार के परे 'स्' के स्थान में 'ष्' होता है।
२. टकार अथवा ठकार के परे 'त्' अथवा 'द्' के स्थान में 'ट्' होता है।
३. डकार अथवा ढकार के परे 'त्' या 'द्' के स्थान में 'ड्' होता है।
४. ठकार, डकार या ढकार के परे पदान्त 'न्' के स्थान में 'ण्' होता है।
५. षकार से पर त के स्थान में ट और थ के स्थान में ठ होता है।

## ( ३ ) झलां जशोऽन्ते

( अत्र 'झल्' इति पञ्चमवर्जं कवर्ग-चवर्ग-टवर्ग-तवर्ग-पवर्गाणाम् ऊष्मणां च प्रत्याहारः । 'जश्' इति तु वर्गतृतीयानां ( ग-ज-ड-द-बानां ) प्रत्याहारः । ऊष्मणां मध्ये तु 'व्रश्चभ्रस्ज–' इति शस्य षत्वे 'ससजुषो रुः' इति सस्य रुत्वे 'हो ढः' इति हस्य ढत्वे च विधाने षकारः एकः एव अवशिष्यते, तस्य च 'ऋटुरषाणां मूर्धा' इति मूर्धस्थानसाम्यात् डकारः आदेशो भवति, तद्यथा––नश्-नष्-नड् । द्विश्-द्विष्-द्विड् । इत्यादि । )

### उपनियमाः

१. पदान्ते—पदान्ते झलां जशः स्युः[1] ।

२. स्वरवर्णेषु, वर्गाणां तृतीयेषु, चतुर्थेषु, य-र-ल-व–इत्येतेषु वा वर्णेषु परेषु पदान्तस्य कस्य स्थाने गकारो भवति[2] ।

३. स्वरवर्णेषु, कवर्ग-तवर्ग-पवर्गाणां तृतीयेषु, चतुर्थेषु, य-र-ल-व इत्येतेषु वा वर्णेषु परेषु पदान्तस्य तस्य स्थाने दकारो भवति [3] ।

### उदाहरण-माला

१. वाक्[4]=वाग् । वाक्[5]+भ्याम्=वाग्भ्याम् । अच्=अज् ।

---

१. पदान्त में स्थित 'झल्' के स्थान में 'जश्' होता है । (सामान्य नियम)

२. वाक्य के मध्य में–पदान्त ककार के बाद वर्गों के तृतीय, चतुर्थ या य, र, ल अथवा व वर्ण रहे तो 'क्' के स्थान में 'ग्' होता है ।

३. वाक्य के मध्य में पदान्त तकार के बाद कवर्ग, तवर्ग या पवर्ग के तृतीय चतुर्थ या य, र, ल, अथवा व वर्ण रहे तो 'त्' के स्थान में 'द्' होता है ।

४. पदान्त 'झल्' के परे कोई भी वर्ण नहीं रहे तो 'झल्' के स्थान में विकल्प से 'चर्' हो जाता है । इसीलिये 'वाक् वाग्' दो रूप होते हैं । दे० 'वाऽवसाने' सू० ।

५. 'सुप्' प्रत्यय से लेकर 'कप्' प्रत्यय पर्यन्त सर्वनामस्थानभिन्न प्रत्ययों के पर में रहने से पूर्व की 'पद' संज्ञा होती है । इसीलिये 'वाक्+भ्याम्' में 'वाक्' भी पद कहलाता है । दे० 'स्वादिष्वसर्वनामस्थाने' सू० ।

अच् + भ्याम् = अज्भ्याम् । षट् = षड् । षट् + भ्याम् = षड्भ्याम् ।
जगत् = जगद् । जगत् + भ्याम् = जगद्भ्याम् गुप् = गुब् ।
गुप् + भ्याम् = गुब्भ्याम् । अप् + भ्यः = अब्भ्यः, अत्[1] + भ्यः = अद्भ्यः ।

२. दिक् + अन्तः दिगन्तः । दिक् + गजः = दिग्गजः ।
धिक् + याचकम् = धिग्याचकम् ।

३. द्विषत् + अन्तः = द्विषदन्तः । तत् + गहनम् = तद्गहनम् ।
त्वत् + यानम् = त्वद्यानम् । इत्यादि[2]

## अभ्यासार्थं प्रश्नाः

( क ) सन्धिं कुरु – सम्यक् + उक्तम् । दिक् + जलम् । दिक् + बन्धः । सम्यक् + वदति । जगत् + ईशः । महत् + धनम् । अप् + जलम् ।

( ख ) सन्धिविच्छेदं कुरु—दिगम्बरः । वाग्जालम् । वाग्दानम् । दिग्भागः । धिग्याचकम् । षड्दर्शनम् । जगदैश्वर्यम् । अब्भाजनम् ।

( ग ) शुद्धं कुरु—प्राक्दर्शनम् । दिग्पालः । षट्गावः । जगत्राजा ।

( घ ) उपनियमस्वरूप स्वगिरोल्लिख्य द्वित्रीण्युदाहरणानि च प्रदर्शयन्तु ।

## ( ४ ) यरोऽनुनासिकेऽनुनासिको वा

यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा स्यात् ।

( चवर्गं विहाय वर्गाणां पञ्चमे वर्णे परे पदान्ते वर्तमानस्य, वर्गाणां प्रथमस्य

---

१. अप् के पकार को तकार होकर दकार हो जाता है। दे० 'अपो भिः' सू०

२. यथा—( २ ) दिगम्बरः । वागाडम्बरः । त्वगिन्द्रियम् । वागीशः । प्रागुक्तम् । सम्यगूहः । धिगृणम् । प्राग्लृतकः । प्रागेव । वागैश्वर्यम् । सम्यगोजः । वागौचित्यम् । प्राग्गमनात् । धिग्घमण्डिन् । वाग्जालः । सम्यग्झङ्कारः । सम्यग्जुहोति । दिग्ढक्का । वाग्दानम् ।
(३) जगदादिः । जगदिन्द्रः । जगदीशः । त्वदुक्तम् । भवदूहनम् । त्वदृणम् ।

तृतीयस्य वा वर्णस्य स्थाने तत्तद्वर्णस्य पञ्चमः तृतीयो वा वर्णो भवति[१]।)

## उपनियमाः

१. नकारे मकारे वा परे पदान्तस्य कस्य गस्य च स्थाने ङकारो गकारो वा भवति।

२. नकारे मकारे वा परे पदान्तस्य टस्य डस्य च स्थाने णकारो डकारो वा भवति।

३. नकारे मकारे वा परे पदान्तस्य तस्य दस्य च स्थाने नकारो दकारो वा भवति।

४. नकारे मकारे वा परे पदान्तस्य पस्य बस्य च स्थाने मकारो बकारो वा भवति।

## उदाहरण-माला

१. दिक्+नागः=दिङ्नागः, दिग्नागः। प्राक्+मुखः=प्राङ्मुखः, प्राग्मुखः।

२. विभ्राट्+नरः=विभ्राण्नरः, विभ्राड्नरः। षट्+मासाः=षण्मासाः, षड्मासाः। विश्वाराट्+नृत्यति=विश्वाराण्नृत्यति, विश्वाराड्नृत्यति।

३. जगत्+नाथः=जगन्नाथः; जगद्नाथः। भवत्+मतम्=भवन्मतम्, भवद्मतम्।

४. ककुप्+नायकः=ककुम्नायकः, ककुब्नायकः। अप्+मग्नः=अम्मग्नः, अब्मग्नः।

---

१. चवर्ग को छोड़कर वर्गों का पंचम वर्ण (ङ्, ण्, न्, म्) बाद में रहे तो पदान्त में वर्तमान वर्ग के प्रथम और तृतीय वर्ण (क् ग्, ट् ड्, त् द्, प् ब्) के स्थान में उसी वर्ग का पञ्चम वर्ण और (तदभाव पक्ष में सू० नं० ३ से) तृतीय वर्ण होता है।

नोट—अनुनासिकादि प्रत्यय के परे (लौकिक प्रयोग में) पदान्त में वर्तमान प्रथम वर्ण के स्थान में पंचम वर्ण नित्य ही होता है। यथा—दिक्+मात्रम्=दिङ्मात्रम्। तत्+मात्रम्=तन्मात्रम्। दे० 'प्रत्यये भाषायां नित्यम्' वा०।

## अभ्यासार्थं प्रश्नाः

( क ) सन्धि कुरु—दिक् + मुखः । षट् + मुखः । षड् + नगर्यः । सत् + मित्रम् । तत् + नीरम् । तत् + मनस्कः । अप् + नायकः ।

( ख ) सन्धिविच्छेदं कुरु—धिङ्मूखंम् । षण्णाम् । जगन्नियन्ता । त्वन्नेता ।

( ग ) शुद्धं कुरु— वांमुखम् । प्रांमुखः । षट्नराः । हृत्मानसम् । अप्नीलः । दिंमात्रेण । चिद्मयता । मृण्मयम् ।

( घ ) चतुर्थोपनियमस्वरूपं सोदाहरणं प्रदर्शयन्तु ।

## ( ५ ) शश्छोऽटि

पदान्तात् 'झयः' परस्य शस्य छो वा स्याद् अटि [1]

### उपनियमाः

१. पदान्तात् ककारात् टकाराद् वा परस्य शस्य छो वा भवति ।

२. पदान्तात् तकाराद् दकाराद् वा परे शकारे सति तस्य दस्य च स्थाने चः[2], शस्य स्थाने छो वा भवति ।

३. पदान्तात् नकारात् परे शकारे सति [3]नस्य स्थाने ञः, शस्य स्थाने छो वा भवति ।

### उदाहरण-माला

१. वाक् + शूरः = वाक्छूरः[4], वाक्शूरः ।
षट् + शूराः + षट्छूराः, षट्शूराः

---

१. पदान्त में स्थित 'झय्' प्रत्याहार के बाद तालव्य शकार हो तो शकार के स्थान में विकल्प से छकार होता है 'अट्' प्रत्याहार के परे ।

नोट—कहीं 'अम्' प्रत्याहार के परे भी 'श' को 'छ' होता है । यथा—तत् + श्लोकेन = तच्छ्लोकेन । तत् + श्लाघ्यः = तच्छ्लाघ्यः । दे० 'छत्वममीति वाच्यम्' वा० ।

२. दे० 'स्तोः श्चुना श्चुः' सू० ।

३. दे० 'शि तुक्' सू० ।

४. 'श' को 'छ' होने पर 'क्' को 'ग्' नहीं होता । दे० 'खरि च' सू० ।

२. जगत् + शरण्यः = जगच्छरण्यः; जगच्शरण्यः।
तद् + शरीरम् = तच्छरीरम्, तच्शरीरम्।

३. महान् + शब्दः = महाञ्छब्दः, महाञ्शब्दः।
धावन् + शशः = धावञ्छशः धावञ्शशः।

### अभ्यासार्थं प्रश्नाः

(क) सन्धि कुरु—दिक् + शूलः। षट् + शरण्याः। सत्यात् + शान्तिः।
(ख) सन्धिविच्छेदं कुरु – स्निक्छोभते। यावच्छक्यम्। मच्छरीरम्।
(ग) शुद्धं कुरु—वाच्छूरः। प्राक्च्छयम्। षट्शोभन्ते। मत्श्वशुरः।
(घ) द्वितोयं तृतीयं चोपनियमस्वरूपं राष्ट्रभाषायां प्रदर्शयन्तु।

## (६) खरि च

खरि परे झलां चरः स्युः। अर्थात्—ग, ज, ड, द-वानां स्थाने क्, च्, ट्, त्, पाः आदेशाः भवन्ति[1], खरि परे।

(इदं सूत्रं पदान्ते अपदान्ते च प्रवर्तते। अतः 'झलां जशोऽन्ते' इति सूत्रविहितं जश्त्वं खरि परे न प्रवर्तते; तत्र अनेन चर्त्वमेव भवति।)

### उदाहरण-माला

१. पदान्ते[2]—दिग् + पालः = दिक्पालः। प्राग् + शेते = प्राक्शेते[3] अज् + सन्धिः = अच्सन्धिः। विराड् + पुरुषः = विराट् पुरुषः। षड् +

---

१ खर् प्रत्याहार के परे ग् ज् ड् द् ब् के स्थान में क्रम से क् च् ट् त् प् होते हैं।

२. अवसान में (आगे किसी भी वर्ण के नहीं रहने पर) पदान्त झल् (ग् ज् ड् द् ब्) के स्थान में विकल्प से चर् (क् च् ट् त् प्) होता है। यथा—वाक्-वाग्, राट्-राड्, तत्-गद्, गुप्-गुब्, इत्यादि। दे० 'वाऽवसाने' सू०।

३. प्राक्शेते-प्राक्छेते इत्यादि वैकल्पिक रूप भी होते हैं। दे० 'शश्छोऽटि' सू०।

सन्तः = षट्सन्तः। सम्पद् + कामः = सम्पत्कामः। उद् + थानम् = उत्थानम्। त्रिष्टुब् + छन्दः = त्रिष्टुप्छन्दः। गुब् + धनम् = गुप्धनम्।

२. अपदान्ते—अग् + स्यति, अक्स्यति = अक्ष्यति। लिड् + सु = लिट्सु। क्षद् + त्रम् = क्षत्त्रम्। लभ् + स्यते = लप्स्यते।

## अभ्यासार्थं प्रश्नाः

( क ) सन्धिं कुरु—दिग् + रक्षकः। वाग् + पटुत्वम्। ऋत्विग् + जुहोति। तज् + श्लाघ्यः। त्विड् + म्लानम्। विड् + धूतः। सम्पद् + प्रभावः।

( ख ) सन्धिविच्छेदं कुरु—दिक्पतिः। प्राक्कथितम्। दिक्शब्दः।

( ग ) शुद्धं कुरु—दिग्पतिः। दिग्पूज्यः। सम्पद्कामः। लभ्स्यते।

( घ ) सूत्रार्थं सोदाहरणं राष्ट्रभाषायां प्रदर्शयन्तु।

## ( ७ ) मोऽनुस्वारः

मान्तस्य पदस्य अनुस्वारः स्याद् हलि।

### उपनियमः

१. पदान्तस्य मस्य अनुस्वारः स्यात्, केष्वपि व्यञ्जनवर्णेषु परेषु[1]।

### उदाहरण-माला

१. धनम् + याचते = धनं याचते। पुस्तकम् + रटति = पुस्तकं रटति। शत्रुम् + हन्ति = शत्रुं हन्ति।

---

१ पदान्त मकार के बाद कोई भी व्यंजन वर्ण रहे तो 'म्' के स्थान में अनुस्वार हो जाता है।

नोट—( क ) कवर्गादि के परे अनुस्वार होने पर अनुस्वार के स्थान में अग्रिम वर्ण का पञ्चम वर्ण और य, ल, व परे रहने से सानुनासिक यँ, लँ, वँ, विकल्प से हो जाता है। यथा—त्वं करोषि, त्वङ्करोषि, इत्यादि। दे० 'वा पदान्तस्य, सू०।

( ख ) क्विबन्त 'राज्' धातु के परे 'सम्' के मकार को अनुस्वार नहीं होता। यथा—सम् + राट् = सम्राट्। दे० 'मो राजि समः क्वौ' सू०।

२. किम् + करोति=किं करोति । ग्रामम् + गच्छति + ग्रामं गच्छति। पुष्पम् + चिनोति = पुष्पं चिनोति । पुस्तकम् + पठति = पुस्तकं पठति। इत्यादि[1]

## अभ्यासार्थं प्रश्नाः

( क ) सन्धि कुरु—कार्यम् + करोति । गृहम् + गच्छति । पुस्तकम् + पठ ।

( ख ) सन्धिविच्छेदं कुरु—सूर्यं प्रणमति । धनं ददाति । हरिं भजति । सय्ँयन्ता । वशव्ँवदः ।

( ग ) शुद्धं कुरु—भोजनम्करोति । कुटिलम्चलति । शङ्खम्धमति हरिम्वन्दे । पुस्तकन्लाति । सम्वत्सरः । देवं अञ्चति । पठितुं इच्छति। धनं एधते । शीघ्रं आगच्छ ।

( घ ) सटिप्पणमुपनियमस्वरूपं राष्ट्रभाषया प्रदर्शयन्तु ।

---

( ग ) य-ल-व-परक संयुक्त हकार के परे 'किम्' स्थानिक मकार के स्थान में सानुनासिक य्ँ, व्ँ, ल्ँ, आदेश विकल्प से होता है । यथा—किम् + ह्यः=किय्ँ ह्यः, किं ह्यः । किम् + ह्लादयति=किल्ँ ह्लादयति, किं ह्लादयति । किम् + ह्वलयति=किव्ँ ह्वलयति, किं ह्वलयति । दे० 'यवलपरे यवला वा' वा० ।

( घ ) मकारपरक संयुक्त हकार के परे 'किम् स्थानिक म् के स्थान में अनुस्वार विकल्प से होता है। यथा–किं ह्मलयति, किम् ह्मलयति । दे० 'हे मपरे वा' सू०।

( ङ ) नकारपरक संयुक्त हकार के परे 'किम्' स्थानिक अनुस्वार के स्थान में नकार विकल्प से होता है । यथा—किम् + ह्नुते = किन्ह्नुते, किं ह्नुते । दे० 'नपरे नः' सू० ।

१. यथा—(१) शीघ्रं याति । करुणं रोदिति । विद्यां लभते । भारं वहति । पाठशालायां शेते । कथं षष्ठः । कष्टं सहते । मधुरं हसति । (१) किं करोषि। भूमिं खनति । ग्रामं गच्छति । व्यर्थं घटयति । कथं ङवते ( क्यों शब्द करता हे ) । धर्मं चिनोति । काष्ठं छिनत्ति । शत्रुं जहि । वस्त्रं टङ्कते । क्लिष्टं ठकारः । पत्रं डयते । इत्थं णकारः । नदीं तरति । शत्रुं थुर्वति। धनं ददाति । स्तनं धयति । गुरुं नमति । वचनं पालयति । किं फलम् । चौरं बध्नाति । मधुरं भाषते । शास्त्रं मीमांसते । इत्यादि ।

## (८) (क) नश्चापदान्तस्य झलि
## (ख) अनुस्वारस्य ययि परसवर्णः

(क) नस्य मस्य चाऽपदान्तस्य, 'झलि' अनुस्वारो भवति।
(ख) 'ययि' परे अपदान्तस्यानुस्वारास्य नित्यं परसवर्णो भवति।

### उपनियमौ

१. (क) श, ष, स, ह, इत्येतेष्वन्यतमेषु कवर्गादिषु वा वर्णेषु परेषु पदमध्यस्थस्य नस्य मस्य च स्थाने अनुस्वारो भवति[1]

२. (ख) कवर्गादिषु परेषु विहितस्यानुस्वारस्य स्थाने परवर्ति-वर्गस्य पञ्चमो वर्णो नित्यं भवति[2]।

### उदाहरण-माला

१. (क) दन् + शनम् = दंशनम्। सम् + शयः = संशयः।
धनून् + षि = धनूंषि। पुम् + षण्ढः = पुंषण्ढः।
यशान् + सि = यशांसि। हिन् + सकः = हिंसकः।
बृन् + हितम् = बृंहितम्। सिन् + हः = सिंहः।

२. (ख) आशं + कते = आशङ्कते। गं + ता = गन्ता।
लवं + गम् = लवङ्गम्। शां + तः = शान्तः
वां + छति = वाञ्छति। पं + फुल्यते = पम्फुल्यते।
उत्कं + ठते = उत्कण्ठते। गुं + फितः = गुम्फितः।

### अभ्यासार्थं प्रश्नाः

(क) सन्धि कुरु—पयान् + सि। सङ्गम् + स्यते। नन् + क्ष्यति। अम् + कितः। अम् + चितः। लुन् + ठितः। मं + तव्यम्। गं + तव्यम्। क्षं + तव्यम्।

---

१. ऊष्म वर्ण अथवा कवर्ग, टवर्ग या पवर्ग के परे पदमध्यस्थ 'न' या 'म्' के स्थान में अनुस्वार होता है।

२. कवर्गादि के परे विहित पदमध्यस्थ अनुस्वार के स्थान में अग्रिम वर्ग का पंचम वर्ण हो जाता है।

( ख ) सन्धिविच्छेदं कुरु—सरांसि। आक्रंस्यते। गंस्यते। रंस्यते। सञ्चितः। क्षन्तव्यम्। शम्भुः।

( ग ) शुद्धं कुरु—पयान्सि। वृम्हणम्। अंचितः। गंगेशः। सुपुमान्सि। धनूम्षि। सुपुम्सी।

( घ ) द्वितीयोपनियमस्याकृतिं राष्ट्रभाषयोल्लिख्य प्रदर्शयन्तु।

## ( ९ ) तोर्लि

तवर्गस्य लकारे परे परसवर्णः स्यात्। ( तवर्गस्य आन्तरतम्यात् लकार एव सवर्णः। )

### उपनियमः

लकारे परे तस्य दस्य च स्थाने ल्, नस्य स्थाने सानुनासिक-'लँ' इत्यादेशो भवति।

### उदाहरण-माला

१. महत् + लावण्यम् = महल्लावण्यम्। तत् + लयः = तल्लयः।
२. तद् + लीन = तल्लीनः। यद् + लिखति = यल्लिखति।
३. तस्मिन् + लयः = तस्मिलँ्लयः। महान् + लाभः = महालँ्लाभः।

### अभ्यासार्थं प्रश्नाः

( क ) सन्धिं कुरु—जगत् + लीला। बृहत् + ललाटम्। महान् + लेखकः महान् + लोभी।

( ख ) सन्धिविच्छेदं कुरु—उल्लेखः। महल्लिप्सा। अस्मल्लेखः: लालयेल्लघुबालकम्। ग्रन्थालँ्लाति।

( ग ) शुद्धं कुरु—महद्लावण्यम्। महान्लम्पटः। बृहत्लता।

( घ ) उपनियमस्वरूपं शब्दान्तरेण सोदाहरणं प्रदर्शयन्तु।

## ( १० ) झयो होऽन्यतरस्याम्

पदान्ताद् झयः परस्य हस्य पूर्वसवर्णो वा स्यात्।

## उपनियमः

हकारे परे ङकरादिपञ्चमवर्णं वर्जयित्वा पदान्ते वर्तमानस्य व्यञ्जनवर्णस्य स्थाने तद्वर्गस्य तृतीयो वर्णः, हस्य स्थाने तु तद्वर्गस्य चतुर्थो वर्णो वा भवति[1]।

## उदाहरण-माला

वाक् + हरिः = वाग्घरिः, वाग्हरिः।
अच् + ह्रस्वः = अज्झ्रस्वः, अज्ह्रस्वः।
षट् + हलानि = षड्ढलानि, षड्हलानि।
तत् + हननम् = तद्धननम्, तद्हननम्।
अप् + हरणम् = अब्भरणम्, अब्हरणम्।

## अभ्यासार्थं प्रश्नाः

(क) सन्धिं कुरु—दिक् + हस्ती। अच् + हलौ। रत्नमुट् + हरति। ईषत् + हसति। अप् + हरति।
(ख) सन्धिविच्छेदं कुरु—वणिग्घसति। तदुद्धरणम्। तद्धेयम्।
(ग) शुद्धं कुरु—वाक्हननम्। प्राक्हतः। विपत्हेतुः। ददत्हसति।
(घ) उपनियमाकारं राष्ट्रभाषया अनूद्यताम्।

---

१. ङकारादि पञ्चम वर्णों को छोड़कर पदान्त में स्थित कवर्गादि वर्ण के आगे 'ह' रहे तो कवर्गादि के स्थान में उसी वर्ग का तृतीय वर्ण और 'ह' के स्थान में उसी वर्ग का चतुर्थ वर्ण विकल्प से होता है। विकल्प पक्ष में प्रथम वर्ण के स्थान में तृतीय वर्ण होता है। दे० 'झलां जशोऽन्ते' सू०।



# व्यञ्जन-सन्धि-विमर्श

( १ ) ह्रस्व स्वर वर्ण के बाद ङ्, ण् या न् रहे और उसके बाद स्वर वर्ण रहे तो 'ङ्' के स्थान में ङ्ङ्, 'ण्' के स्थान में ण्ण् तथा न्' के स्थान में 'न्न्' हो जाता है[1]। यथा—प्रत्यङ् + आत्मा = प्रत्यङ्ङात्मा। सुगण् + ईशः = सुगण्णाशः। धावन् + अश्वः = धावन्नश्वः। इत्यादि।

( २ ) 'च' या 'छ' के परे रहते पदान्त 'न्' के स्थान में अनुनासिक अथवा अनुस्वार और 'च' के स्थान में 'श्च' तथा 'छ' के स्थान में 'श्छ' होता है[2]। यथा—गच्छन् + चकोरः = गच्छँश्चकोरः, गच्छंश्चकोरः। धावन् + छागः = धावँश्छागः धावंश्छागः।

( ३ ) 'ट' या 'ठ' के परे रहते पदान्त 'न्' के स्थान में अनुनासिक अथवा अनुस्वार होता है और 'ट' के स्थान में 'ष्ट[3]' तथा 'ठ' के स्थान में 'ष्ठ' होता है। यथा—महान् + टीकाकारः, महाँष्टीकाकारः, महांष्टीकाकारः। महान् + ठक्कुरः = महाँष्ठक्कुरः, महांष्ठक्कुरः।

( ४ ) 'त' या 'थ' के परे रहते पदान्त 'न्' के स्थान में अनुनासिक अथवा अनुस्वार होता है और 'त' के स्थान में 'स्त' तथा 'थ' के स्थान में 'स्थ' होता है। यथा—महान् + तडागः = महाँस्तडागः, महांस्तडागः, महाँस्थकारः।

( ५ ) 'कृ' धातु से निष्पन्न शब्द के परे रहते 'सम्' उपसर्ग के 'म्' को अनुस्वार और उस अनुस्वार से पर 'स्' होता है[4]। यथा-सम् + कृतः = संस्कृतः।

( ६ ) वर्ग का प्रथम या द्वितीय वर्ण पर में रहने से पुम्' के 'म्' को अनुस्वार और उस अनुस्वार से पर 'स्' या 'श्' 'ष्' होते है[5]। यथा—पुम् + कोकिलः = पुंस्कोकिलः। पुम् + खनित्रम् = पुंस्खनित्रम्। पुम् + चरित्रम् = पुंश्चरित्रम्। पुम् + टीका = पुंष्टीका। इति व्यञ्जन-सन्धिः।

---

१. दे० 'ङमो ह्रस्वादचि ङमुण्नित्यम्' सू०।

२. दे० 'नश्छव्यप्रशान्', 'अत्रानुनासिकः पूर्वस्य तु वा'; 'अनुनासिकात् परोऽनुस्वारः', 'खरवसानयोर्विसर्जनीयः', 'विसर्जनीयस्य सः', 'स्तोः श्चुना श्चुः' सू०।

३. दे० 'ष्टुना ष्टुः' सू०। ४. दे० 'समः सुटि' सू०। ५. दे० 'पुमः खय्यम्परे' सू०।

# विसर्ग-सन्धिः

(यत्र विसर्गेण सह स्वरवर्णस्य व्यञ्जनवर्णस्य वा सन्धिः स विसर्ग-सन्धिः[1])।

विसर्गस्तावद् द्विप्रकारकः – सजातः, रजातश्च[2]।

तत्र (१) शब्दसम्बन्धिनः, (२) विभक्ति (सुप्-तिङ्) सम्बन्धिनः, (३) प्रत्ययसम्बन्धिनो वा सकारस्य स्थाने यत्र विसर्गो भवति स सजात-विसर्गः[3]।

यत्र तु (१) शब्दसम्बन्धिनः (स्वाभाविकस्य) (२) ऋकार-स्थानिकस्य वा रेफस्य स्थाने विसर्गो भवति स रजात-विसर्गः[4]। तद्यथा–

(क) सजातविसर्गः—

१—शब्दसम्बन्धी—निस् = निः। दुस् = दुः। शनैस् = शनैः।

२—विभक्तिसम्बन्धी—देवस् = देवः। पठामस् = पठामः।

३—प्रत्ययसम्बन्धी—एकशस् + एकशः। बहुशस् = बहुशः।

(ख) रजातविसर्गः—

१—शब्दसम्बन्धी—स्वर् = स्वः। अन्तर् = अन्तः। प्रातर् = प्रातः।

२—ऋकारस्थानिक—गीर् = गीः। पूर् = पूः। मातर् = मातः।

**(१) (क) विसर्जनीयस्य सः। (ख) वा शरि**

खरि परे विसर्जनीयस्य नित्यं सः स्यात्, शरि परे तु वा स्यात्।

---

१. विसर्ग के साथ स्वर या व्यंजन वर्ण की जो सन्धि होती है, उसे विसर्गसन्धि कहते हैं।

२. क्वचित् 'ष्' तथा 'न्' के स्थान में भी 'र्' होकर विसर्ग होता है। यथा– सजुष् = सजूः (दे० "ससजुषो रुः" सू०)। अहन् = अहः (दे० 'अहन्' सू०)।

३. शब्द, विभक्ति या प्रत्यय-सम्बन्धी 'स्' के स्थान में जो विसर्ग होता है उसे सजात (स से उत्पन्न) विसर्ग कहते हैं।

४. स्वाभाविक (शब्द सम्बन्धी) या ऋकारस्थाविक 'र्' के स्थान में जो विसर्ग होता है, उसे रजात (र से उत्पन्न) विसर्ग कहते हैं।

## उपनियमाः

१. चकारे छकारे वा परे विसर्गस्य स्थाने 'श' भवति[१]।
२. टकारे ठकारे वा परे विसर्गस्य स्थाने 'ष्' भवति[२]।
३. तकारे थकारे वा परे विसर्गस्य स्थाने 'स' भवति[३]।
४. श-ष-स-इत्येतेषु अन्यतमेषु परेषु तु विसर्गस्य स्थाने 'श्, ष्, स्' इति यथासंख्यं वा भवति[४]।

## उदाहरण-माला

१. पूर्णः + चन्द्रः = पूर्णश्चन्द्रः[५]। निः + चितः = निश्चितः।
धावितः + छागः = धावितश्छागः। रवेः + छविः = रवेश्छविः।
२. भीतः + टलति = भीतष्टलति[६]। धनुः + टङ्कारः = धनुष्टङ्कारः।
स्थिरः + ठक्कुरः = स्थिरष्ठक्कुरः। भग्नः + ठकारः = भग्नष्ठकारः।
३. नद्याः + तीरम् = नद्यास्तीरम्। भूमेः + तलम् = भूमेस्तलम्।
अनुचरितः + थकारः = अनुचरितस्थकारः।
४. हरिः + शेते = हरिश्शेते, हरिः शेते[७]।
देवाः + षट् = देवाष्षट्, देवाः षट्।
मनः + सन्तोषम् = मनस्सन्तोषम्, मनःसन्तोषम्।

## अभ्यासार्थं प्रश्नाः

(क) सन्धिं कुरु—वायुः + चलति। तरोः + छाया। बालः + टीकते। भग्नः + ठक्कुरः। उन्नतः + तरुः।

---

१. चकार अथवा छकार के परे रहते विसर्ग के स्थान में 'श' होता है।
२. टकार अथवा ठकार के परे रहते विसर्ग के स्थान में 'ष्' होता है।
३. तकार अथवा थकार के परे रहते विसर्ग के स्थान में 'स्' होता है।
४. श, ष या स के परे रहते विसर्ग के स्थान में क्रम से श्, ष्, स् विकल्प से होता है।
५. दे० 'स्तोः श्चुना श्चुः' सू०। ६. दे० 'ष्टुना ष्टुः' सू०।
७. दे० 'वा शरि' सू०।

( ख ) सन्धिविच्छेदं कुरु—तपश्चिनोति। दुश्चिन्ता। खगाश्चञ्चलाः। उड्डीनष्टिट्टिभः। मग्नष्ठक्कुरः। सुन्दरस्तपस्वी।

( ग ) शुद्धं कुरु—पूर्णो चन्द्रो उदेति। आकाशस्थो सूर्यो छन्नः। मत्तो ठक्कुरो टलति। इतः स्ततश्छेते। चत्वारो षट्पदाः।

( घ ) यथेच्छं कमप्युपनियमं सोदाहरणं प्रदर्श्यताम्।

## ( २ ) ससजुषो रुः

पदान्तस्य सस्य सजुषश्च रुः स्यात्।

### उपनियमौ

१. यत्र इकारादिस्वरवर्णात् परो विसर्गः ( स् ), विसर्गात् परश्च स्वरवर्णः, तत्र विसर्गस्थाने 'र्' भवति।

२. यत्र इकारादिस्वरवर्णात् परो विसर्गः, विसर्गात् परश्च वर्गाणां तृतीयः चतुर्थः पञ्चमः किं वा य-ल-व-ह-इत्येतेषु अन्यतमो वा वर्णः तत्र विसर्गस्य स्थाने 'र्' भवति।

### उदाहरण-माला

१. हरिः+अयम्=हरिरयम्। श्रीः+असौ=श्रीरसौ। गुरुः+उवाच=गुरुरुवाच। वधूः+एषा=वधूरेषा। इत्यादि[3]।

२. हरिः+गच्छति=हरिर्गच्छति। ऋषिः+घटयति=ऋषिर्घटयति। इत्यादि[4]।

---

१. स्वरवर्ण के परे रहते अ, आ से भिन्न स्वर के पर स्थित विसर्ग के स्थान में 'र्' होता है।

२. वर्ग का तृतीय, चतुर्थ, पञ्चम किं वा य, ल, व, ह, पर में रहे तो अ, आ से भिन्न स्वर के परस्थित विसर्ग के स्थान में 'र्' होता है।

३. यथा—मातुरर्चा। रवेरुदयः। देवैरुक्तम्। प्रभोरादेशः। गौरयम्।

४. यथा – बहिर्ङकारः। गुरुर्जयति। प्रभूतैर्झङ्कारैः। कतिपयैर्ङकारैः। नवीनैर्डमरुभिः। गौर्ढौकते। नस्थानिकैर्णकारैः। हरेर्दर्शनम्। निर्धनः। दुर्नीतिः। निर्बन्धः। निर्भयः। मुहुर्मुहुः। बहिर्योगः। विष्णुर्लीयते। वायुर्वाति। प्रभुर्हसति।

## अभ्यासार्थं प्रश्नाः

( क ) सन्धि कुरु—कविः + अयम् । गतिः + इयम् । रविः + उदेति धीः + असौ । भानुः + गच्छति । हरेः + ज्येष्ठः । निः + दयः ।
( ख ) सन्धिविच्छेदं कुरु—हरिरयम् । बन्धुरागतः । ऋषिर्गच्छति ।
( ग ) द्वितीयोपनियमस्वरूपं राष्ट्रभाषया सोदाहरणं प्रदर्शयन्तु ।

## ( ३ ) अतो रोरप्लुतादप्लुते

अप्लुताद् अतः परस्य रोः उः स्याद् अप्लुते अति परे ।

### उपनियमः

यत्र अकारात् परो विसर्गः विसर्गात् परः अकारः, तत्र पूर्वाकार-विसर्गयोः स्थाने ( रुत्वे उत्वे गुणे च कृते ) 'ओ' भवति, परवर्त्यकारस्य तु पूर्वरूपो भवति[1] ।

### उदाहरण-माला

शिवः + अर्च्यः = शिवोऽर्च्यः । कुतः + अत्र = कुतोऽत्र !
कः + अयम् = कोऽयम् । यशः + अभिलाषी = यशोऽभिलाषी ।
देवः + अयम् = देवोऽयम् । धावतः + अश्वः = धावतोऽश्वः ।

विमर्शः—यत्र अकाराद् इकाराद् उकाराद् वा परः रजातो विसर्गः, विसर्गात् परस्तु स्वरवर्णः अथवा वर्गाणां तृतीयः चतुर्थः पञ्चमः किंवा 'य-ल व-ह' इत्येतेषु अन्यतमो वा वर्णः, तत्र रजातस्य विसर्गस्य स्थाने रेफो भवति[2] । यथा—

१. यदि ह्रस्व अकार के बाद विसर्ग और विसर्ग के बाद 'अ' रहे तो अकार और विसर्ग के स्थान में 'ओ' होता है और विसर्ग के बाद जो अकार रहता है उसके स्थान में लुप्ताकार का चिह्न ( ऽ ) दिया भी जाता है ।

२. यदि अकार, इकार या उकार के बाद रजात विसर्ग रहे और विसर्ग के बाद स्वर वर्ण अथवा वर्ग का तृतीय, चतुर्थ, पञ्चम किंवा य, ल, व या ह रहे तो रजात विसर्ग के स्थान में रेफ होता है। ( रजात विसर्ग के सम्बन्ध में दे० पृ० ३०)

१. पुनः + अपि = पुनरपि । पुनः + आगतः = पुनरागतः ।
२. पुनः + गच्छ = पुनर्गच्छ । पुनः + घमण्डः = पुनर्घमण्डः ।
३. भ्रातः + युध्यस्व = भ्रातर्युध्यस्व । पुनः + लब्धः = पुनर्लब्धः ।
मातः + वन्दे = मातर्वन्दे । पुनः + हसति = पुनर्हसति ।

## अभ्यासार्थं प्रश्नाः

( क ) सन्धिं कुरु—नवः + अंकुरः । मनः + अभिलाषी । सः + अहम् ।

( ख ) सन्धिविच्छेदं कुरु—रामोऽधीशः । पुनर्गच्छति । भ्रातर्वद ।

( ग ) शुद्धं कुरु—पयाऽभिलाषी । रामाऽहं चतुराऽस्मि । माणवकाऽयं वेदाऽधीतः । प्रातो गच्छति । पुनः पुनो वा जामातो वद ।

( घ ) उपनियमाकारं राष्ट्रभाषया सोदाहरणं प्रदर्शयन्तु ।

## ( ४ ) हशि च

अप्लुताद् अतः परस्य रोः उः स्याद् हशि परे ।

### उपनियमः

यत्र अकारात् परो विसर्गः विसर्गात् परः वर्गाणां तृतीयः, चतुर्थः, पञ्चमः अथवा 'य, र, ल, व, ह' इत्येतेष्वन्यतमो वा वर्णः, तत्र अकार-विसर्गयोः स्थाने ( रुत्वे उत्वे गुणे च कृते ) 'ओ' भवति[1] ।

### उदाहरण-माला

रामः गच्छति = रामो गच्छति । सद्यः + जातः = सद्यो जातः । सुन्दरः + डमरुः = सुन्दरो डमरुः । निर्वाणः + दीपः = निर्वाणो दीपः । दृढः + बन्धः = दृढो बन्धः । नरः + याति = नरो याति । मनः + रथः =

१. यदि अकार के बाद विसर्ग रहे और विसर्ग के बाद वर्ग का तृतीय, चतुर्थ, पञ्चम अथवा य, र, ल, व या ह रहे तो अकार और विसर्ग के स्थान में 'ओ' हो जाता है ।

मनोरथः। यशः+लभते=यशो लभते। बालः+वदति=बालो-वदति। देवः+हसति=देवो हसति। इत्यादि[१]।

विमर्श—(१) यत्र अकारात् परः विसर्गः विसर्गात् परः आकारादिः स्वरवर्णः तत्र विसर्गस्य लोपो भवति[२]। यथा—

कुतः+आगतः=कुत आगतः। बालः+इव=बाल इव। कः+ईहते=क ईहते। सूर्यः+उदेति=सूर्य उदेति। इत्यादि[३]।

(२) यत्र आकारात् परो विसर्गः, विसर्गात् परः स्वरवर्णः अथवा वर्गाणां तृतीयः, चतुर्थः, पञ्चमः, किंवा 'य, र, ल, व, ह' इत्येतेष्वन्यतमो वा वर्णः तत्र विसर्गस्य लोपो भवति[४]। यथा—

---

१. यथा—पूर्णो घटः। अद्भुतो ङकारः। मधुरो झङ्कारः। इको ञश्च। गजो ढौकते। मूर्धन्यो णकारः। मृगो धावति। सुन्दरो नरः। मनोभावः। अतीतो मासः।

२. यदि अकार के बाद विसर्ग और विसर्ग के बाद अकारभिन्न स्वर वर्ण रहे तो विसर्ग का लोप हो जाता है। (लोप के पश्चात् पुनः सन्धि नहीं होती। दे० 'भोभगोअघोअपूर्वस्य योऽशि' तथा 'लोपः शाकल्यस्य' सू०)।

३. यथा—तत ऊर्ध्वम्। बाल ऋषिः। गत ऌतकः। क एषः। कुत ऐक्यम्। पीत ओष्ठः। राज्ञ औदार्यम्। धीमत औत्सुक्यम्। इत्यादि।

४. यदि आकार के बाद विसर्ग और विसर्ग के बाद स्वर वर्ण अथवा वर्ग का तृतीय, चतुर्थ, पञ्चम किंवा य, र, ल, व या ह रहे तो आकार के परस्थित विसर्ग का लोप हो जाता है। (लोप के पश्चात् पुनः सन्धि नहीं होती। दे० 'लोपः शाकल्यस्य' 'हलि सर्वेषाम्' सू०)।

नोट—उपर्युक्त परिस्थिति में 'भोः' और 'भगोः' के विसर्ग का भी लोप हो जाता है।

यथा—भो अनिरुद्ध। भो गदाधर। भगो जनार्दन।

१. वालकाः + अमी = वालका अमी । वालिकाः + इमाः = वालिका इमाः । इत्यादि[1] ।

२. वालकाः + गताः = वालका गताः । नष्टाः + घटाः = नष्टा घटाः । इत्यादि[2] ।

## अभ्यासार्थं प्रश्नाः

(क) सन्धिं कुरु—शोभनः + घटः । रामः + जयति । कृतः + यत्नः । शान्तः + रोषः । देवः + उवाच । नरः + एषः । रक्तः + ओदनः । ब्राह्मणाः + आगताः । देवाः + ऊचुः । हृष्टाः + ढुण्ढिराजाः । गताः + मधुमक्षिकाः । ब्राह्मणाः + याचन्ते । वाताः + वान्ति ।

(ख) सन्धिविच्छेदं कुरु—देवो गतः । कुतो झनत्कारः । दुष्टो हतः । क आगच्छति । आगता मधुमासाः । कोकिला हृष्यन्ति ।

(ग) शुद्धं कुरु—आगतश्जनार्दनः, जामातरभ्रातरो वा । देवोवाच । कुतो आगताः ऋषयः । ततोर्ध्वं बालिकाः वदन्ति ।

(घ) विमर्शोपाख्यानं राष्ट्रभाषायां विशदीकुर्वन्तु ।

---

१. यथा—तारा उदिताः । आगता ऋषयः । ग्रन्था एते । गता ओघाः ।

२. यथा—पुत्रा जाताः । मधुरा झङ्काराः । नवीना डमरवः । गर्दभा ढौकन्ते । आगता देवाः । बालिका धावन्ति । उन्नता नगाः । सन्तुष्टा बुधाः । पलायिता भीताः । अतीता मासाः । छात्त्रा यजन्ते । एता रुग्णाः । पाठका लभन्ते । बालका वदन्ति । सज्जना हसन्ति । इत्यादि ।

# विसर्ग-सन्धि-विमर्श

( क ) रेफ के परे रहते विसर्ग ( विसर्गस्थानीय रेफ ) का लोप हो जाता है और लोप होने पर उसका पूर्वस्वर दीर्घ हो जाता है[1] । यथा—

पुनः + रमते = पुना रमते । पितः + रक्ष = पिता रक्ष । हरिः + रम्यः = हरी रम्यः । निः + रसः = नीरसः । हरिः + राजते = हरी राजते । निः + रोगः = नीरोगः । शम्भुः + राजते = शम्भू राजते । मातुः + रोदनम् = मातू रोदनम् । अन्तः + राष्ट्रियः = अन्ता राष्ट्रियः ।

( ख ) यदि अकार से भिन्न स्वर अथवा व्यञ्जन वर्ण पर में रहे तो 'सः' और 'एषः' इन दोनों पदों के विसर्ग का लोप हो जाता है । ( और लोप होने पर पुनः सन्धि नहीं होती[2] । यथा—

१. सः + आगतः = स आगतः । सः + इच्छति = स इच्छति । इत्यादि[3] ।

२. एषः + आगतः = एष आगतः । एषः + एति = एष एति । एषः + धावति = एष धावति । इत्यादि[4] ।

( ग ) विसर्ग के बाद क, ख, या प, फ रहे तो विसर्ग का विसर्ग ही रह जाता है[5] । यथा—

१. कः + करोति = कः करोति । कः + खनति = कः खनति ।

२. कः + पचति = कः पचति । कः + फलति = कः फलति ।

( घ ) निम्नलिखित समासस्थल में विसर्ग के बाद—क, ख, अथवा प, फ रहे तो अकार से पर विसर्ग के स्थान में 'स्' तथा इकार अथवा उकार से पर विसर्ग के स्थान में 'ष्' हो जाता है[6] । यथा—

१. अधः + पदम् = अधस्पदम् । २. निः + कृतम् = निष्कृतम् । इत्यादि ।

---

१. दे० 'रो रि', तथा 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' सू० । २. दे० 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' तथा 'सोऽचि लोपे चेत् पादपूरणम्' सू० ।

३. यथा—स उवाच । स करोति । स गच्छति । स चिनोति । स हसति ।

४. यथा—एष वदति । एष शोभते । एष सहते । एष शृणोति । एष हसति ।

५. दे० 'कुप्वोः ≍क ≍पौ च' सू० ।

६. यह सत्व और षत्व विधान कहीं विकल्प से भी होता है ।

# सुबन्त-प्रकरणम्

## ( १ ) अकारान्तः पुँल्लिङ्गो 'देव' शब्दः

| | एकवचनम् | द्विवचनम् | वहुवचनम् | |
|---|---|---|---|---|
| प्रथमा | देव: | देवौ | देवा: | कर्ता |
| द्वितीया | देवम् | देवौ | देवान् | कर्म |
| तृतीया | देवेन | देवाभ्याम् | देवैः | करणम् |
| चतुर्थी | देवाय | देवाभ्याम् | देवेभ्य: | सम्प्रदानम् |
| पञ्चमी | देवात्-द् | देवाभ्याम् | देवेभ्य: | अपादानम् |
| षष्ठी | देवस्य | देवयो: | देवानाम् | सम्बन्धः |
| सप्तमी | देवे | देवयोः | देवेषु | अधिकरणम् |
| संबोधनम् | हे देव | हे देवौ | हे देवा: | |

सर्वादिगणं विहाय प्राय: सर्वे अकारान्तपुंल्लिङ्गशब्दा: 'देव'शब्दवद् भवन्ति[1]।

## ( २ ) इकारान्तः पुँल्लिङ्गः 'मुनि' शब्दः

| | | | |
|---|---|---|---|
| प्र० | मुनिः | मुनी | मुनयः |
| द्वि० | मुनिम् | मुनी | मुनीन् |
| तृ० | मुनिना | मुनिभ्याम् | मुनिभिः |
| च० | मुनये | मुनिभ्याम् | मुनिभ्य: |
| पं० | मुने: | मुनिभ्याम् | मुनिभ्य: |
| ष० | मुने: | मुन्यो: | मुनीनाम् |

---

१. तद्यथा—अभिमान, आकर, इन्द्र, उत्सव, ऋषभ, लृतक, एकान्त, कर्णजार, खण्ड, गोविन्द, घट, चन्द्र, छात्त्र, जनक, टङ्क, डिमडिम, ढुण्ढिराज, ठक्कुर, तण्डुल, दन्त, धनेश, नर, पट, फाल्गुन, बालक, भक्त, मनोहर, यज्ञ, रमेश, लङ्केश, वल्लभ, शशिधर, षडानन, समय, हस्त, इत्यादि । (कुछ आकारान्त शब्द भी पुँल्लिङ्ग होते हैं । यथा—विश्वपा, गोपा, धनपा, शंखध्मा, हाहा, इत्यादि । 'ज्ञा' अव्यय है ।)

| | | | |
|---|---|---|---|
| स० | मुनौ | मुन्योः | मुनीषु |
| सं० | हे मुने | हे मुनी | हे मुनयः |

प्रायः सर्वे इकारान्ताः पुँल्लिङ्गशब्दाः 'मुनि'शब्दवद् भवन्ति[1]।

## ( ३ ) उकारान्तः पुँल्लिङ्गो 'भानु' शब्दः

| | | | |
|---|---|---|---|
| प्र० | भानुः | भानू | भानवः |
| द्वि० | भानुम् | भानू | भानून् |
| तृ० | भानुना | भानुभ्याम् | भानुभिः |
| च० | भानवे | भानुभ्याम् | भानुभ्यः |
| पं० | भानोः | भानुभ्याम् | भानुभ्यः |
| ष० | भानोः | भान्वोः | भानूनाम् |
| स० | भानौ | भान्वोः | भानुषु |
| सं० | हे भानो | हे भानू | हे भानवः |

एवमन्येप्युकारान्ताः पुँल्लिङ्गशब्दाः[2]।

---

१. यथा—अग्नि, अङ्घ्रि ( चरण ), अतिथि, अद्रि, अरि, अलि ( भ्रमर ), अवधि, असि, अहि ( सर्प ), आधि, उपाधि, ऋषि, कवि, कपि, कलि, कुक्षि, कृमि, केलि, गिरि, ग्रन्थि, दुन्दुभि, धूर्जटि, ध्वनि, नाभि, निधि, पदाति, परिधि, पाणि, प्रणिधि ( चर, दूत ), बलि, मणि, मरीचि, मसि ( स्याही ), यति, रवि, रश्मि, राशि, लिङ्गवृत्ति (नकली भिक्षुक), वनस्पति, विधि, व्याधि, शुचि, सन्धि, सन्निधि, सप्तर्षि, समाधि, सारथि, हरि, हेमाद्रि, इत्यादि।

नोट—( १ ) 'पति' और 'सखि' शब्दों के रूप कुछ भिन्न होते हैं। दे० 'शेषो घ्यसखि' सू०। (२) दीर्घ ईकारान्त शब्द भी पुँल्लिङ्ग होते हैं। यथा—अग्रणी, ग्रामणी, प्रधी, बहुश्रेयसी, मन्दधी, यवक्री, सुधी, सुश्री, हतधी, इत्यादि।

२. यथा—अंशु ( किरण ), अणु, असु ( नि० बहु० ), इन्दु, इषु ( पुं० स्त्री० ), ऊरु, ऋतु, कृपालु ( वि० ), कृशानु, केतु, क्रतु, गुरु, चरु, चित्रभानु, जन्तु, जिघत्सु ( भूखा ), जिष्णु ( इन्द्र ), तन्तु, दस्यु, धूमकेतु, न्यङ्कु, पटु, परशु, पलाण्डु, पशु, पांशु, प्रभु, फल्गु ( व्यर्थ, वि० ), बन्धु, बटु, बाहु, बिन्दु, भविष्णु, भानु, भिक्षु, मनु, मन्यु, मरु, मृत्यु, मृदु, मेरु, राहु, रिपु, रेणु ( पुं० स्त्री० ), लज्जालु, वर्धिष्णु

## ( ४ ) ऋकारान्तः पुँल्लिङ्गो 'दातृ' शब्दः

| | | | |
|---|---|---|---|
| प्र० | दाता | दातारौ | दातारः |
| द्वि० | दातारम् | दातारौ | दातॄन् |
| तृ० | दात्रा | दातृभ्याम् | दातृभिः |
| च० | दात्रे | दातृभ्याम् | दातृभ्यः |
| पं० | दातुः | दातृभ्याम् | दातृभ्यः |
| ष० | दातुः | दात्रोः | दातॄणाम् |
| स० | दातरि | दात्रोः | दातृषु |
| सं० | हे दातः | हे दातारौ | हे दातारः |

एवं कर्तृ, जेतृ, द्रष्टृ, धातृ, श्रोतृ, सवितृ, स्रष्टृ हन्तृ, इत्यादयः[1]।

## ( ५ ) ऋकारान्तः पुँल्लिङ्गः 'पितृ' शब्दः

| | | | |
|---|---|---|---|
| प्र० | पिता | पितरौ | पितरः |
| द्वि० | पितरम् | पितरौ | पितॄन् |
| तृ० | पित्रा | पितृभ्याम् | पितृभिः |
| च० | पित्रे | पितृभ्याम् | पितृभ्यः |
| पं० | पितुः | पितृभ्याम् | पितृभ्यः |
| ष० | पितुः | पित्रोः | पितॄणाम् |
| स० | पितरि | पित्रोः | पितृषु |
| सं० | हे पितः | हे पितरौ | हे पितरः |

एवं भ्रातृ, जामातृ, दुहितृ, देवृ, सव्येष्टृ ( सारथि ) नृ, इत्यादयः।

---

( त्रि० ), वायु, विधु, विष्णु, वेणु, वेपथु, शत्रु, शम्भु, सहस्रांशु, साधु, सिन्धु, सुधांशु, सूनु, सेतु, हेतु, इत्यादि।

नोट—( १ ) 'क्रोष्टु' शब्द के रूप कुछ भिन्न होते है। दे० 'तृज्वत्क्रोष्टुः सू०

( २ ) ऊकारान्त पुंल्लिङ्ग शब्द—अग्निभू, जितभू, अधिभू, प्रतिभू (जमानतदार), स्वभू, स्वयम्भू, मनोभू, करभू, खल्पू, दृन्भू, वर्षाभू, सुलू, हूहू, इत्यादि।

१. 'कर्तृ' आदि शब्दों के रूप 'दातृ' के समान और 'भ्रातृ' आदि शब्दों के रूप 'पितृ' शब्द के समान होते हैं। दे० 'नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्'

## ( ६ ) ओकारान्तः पुँल्लिङ्गो 'गो' शब्दः

| | | | |
|---|---|---|---|
| प्र० | गौः | गावौ | गावः |
| द्वि० | गाम् | गावौ | गाः |
| तृ० | गवा | गोभ्याम् | गोभिः |
| च० | गवे | गोभ्याम् | गोभ्यः |
| पं० | गोः | गोभ्याम् | गोभ्यः |
| ष० | गोः | गवोः | गवाम् |
| स० | गवि | गवोः | गोषु |
| सं० | हे गौः | हे गावौ | हे गावः |

प्रायः सर्वेषां 'सुधो, स्मृतो' इत्यादिशब्दानां 'गो'शब्दवद् रूपाणि भवन्ति[1]।

### अभ्यासार्थं प्रश्नाः

(१) इकारान्त-उकारान्त-ऋकारान्तानां पुँल्लिङ्गशब्दानां कयोश्चिद् द्वयोः सर्वासु विभक्तिषु रूपाणि प्रदर्श्य 'दातृ'शब्दस्य षष्ठी-बहुवचने रूपं विलिखन्तु।

(२) शुद्धं कुरु—देवाणां नरानां मुनीसु वा सुधयः गवाश्च श्रेष्ठा।

---

## ( ७ ) आकारान्तः स्त्रीलिङ्गो 'लता' शब्दः

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र० | लता | लते | लताः |
| द्वि० | लताम् | लते | लताः |
| तृ० | लतया | लताभ्याम् | लताभिः |
| च० | लतायै | लताभ्याम् | लताभ्यः |
| पं० | लतायाः | लताभ्याम् | लताभ्यः |

---

१. ऐकारान्त तथा औकारान्त शब्द भी पुँल्लिङ्ग होते हैं। यथा—( १ ) रै (धन)—राः, रायौ, रायः। इत्यादि। ( २ ) ग्लौ ( चन्द्र, कपूर )—ग्लौः, ग्लावौ, ग्लावः। इत्यादि।

| | | | |
|---|---|---|---|
| ष० | लतायाः | लतयोः | लतानाम् |
| स० | लतायाम् | लतयोः | लतासु |
| सं० | हे लते | हे लते | हे लताः |

एवमन्ये अपि आकारान्ताः स्त्रीलिङ्गशब्दाः[1]।

## (८) इकारान्तः स्त्रीलिङ्गो 'मति' शब्दः

| | | | |
|---|---|---|---|
| प्र० | मतिः | मती | मतयः |
| द्वि० | मतिम् | मती | मतीः |
| तृ० | मत्या | मतिभ्याम् | मतिभिः |
| च० | मत्यै-मतये | मतिभ्याम् | मतिभ्यः |
| पं० | मत्याः-मतेः | मतिभ्याम् | मतिभ्य |
| ष० | मत्याः-मतेः | मत्योः | मतीनाम् |
| स० | मत्याम्-मतौ | मत्योः | मतिषु |
| सं० | हे मते | हे मती | हे मतयः |

एवमन्ये अपि, इकारान्ताः स्त्रीलिङ्गशब्दाः[2]।

## (९) ईकारान्तः स्त्रीलिङ्गो 'नदी' शब्दः

| | | | |
|---|---|---|---|
| प्र० | नदी | नद्यौ | नद्यः |
| द्वि० | नदीम् | नद्यौ | नदीः |
| तृ० | नद्या | नदीभ्याम् | नदीभिः |

१. यथा—अजा, आज्ञा, इच्छा, उमा, कन्या, गङ्गा, घटिका, चिन्ता, छाया, जनता, तारा, दशा, पत्रिका, पाठशाला, बालिका, भाषा, माला, यात्रा, रमा, रेखा, लज्जा, वसुधा, शोभा, सीता, सेना, हेला, इत्यादि (सर्वादिगणपठित आकारान्त शब्दों के रूप कुछ भिन्न होते हैं। दे० सर्वादीनि सर्वनामानि' सू०।

२. यथा—अवनति, अपचिति (क्षीणता) इष्टि, ईति (विप्लव), उन्नति, उत्पत्ति, ऊर्मि, ऋद्धि, कान्ति, कृति, क्षति, गति, गुप्ति, चिति,

| | | | |
|---|---|---|---|
| च० | नद्यै | नदीभ्याम् | नदीभ्यः |
| पं० | नद्याः | नदीभ्याम् | नदीभ्यः |
| ष० | नद्याः | नद्योः | नदीनाम् |
| स० | नद्याम् | नद्योः | नदीषु |
| सं० | हे नदी | हे नद्यौ | हे नद्यः |

एवम् अन्येपि, इकारान्ताः स्त्रीलिङ्गशब्दाः[1] ।

## ( १० ) उकारान्तः स्त्रीलिङ्गो 'धेनु' शब्दः

| | | | |
|---|---|---|---|
| प्र० | धेनुः | धेनू | धेनवः |
| द्वि० | धेनुम् | धेनू | धेनूः |
| तृ० | धेन्वा | धेनुभ्याम् | धेनुभिः |
| च० | धेन्वै धेनवे | धेनुभ्याम् | धेनुभ्यः |
| पं० | धेन्वाः-धेनोः | धेनुभ्याम् | धेनुभ्यः |
| ष० | धेन्वाः-धेनोः | धेन्वोः | धेनूनाम् |

छवि, जाति, तिथि, द्युति, धृति, नीति, पंक्ति, प्रकृति, प्राप्ति, भूति, मूर्ति, युवति, रात्रि, विपत्ति, वसात, शक्ति, समिति, साति, ( दान ), स्मृति हानि, हेति, इत्यादि ।

नोट—भाववाच्य में 'क्त' प्रत्ययान्त सभी शब्द 'मति' शब्द के समान होते हैं। यथा–आसक्ति, कृति, बुद्धि, भक्ति, मुक्ति, विरक्ति, स्तुति, श्रुति, इत्यादि ।

१. यथा—अटवी, उर्वी, ( पृथिवी ), कुमारी, गृहिणी, गौरी, जननी, जगती, तन्त्री, धात्री, नारी, पत्नी, पृथिवी, भगिनी, भागवती, महती, महिषी, युवती, राज्ञी, लेखनी, वाणी, श्रेणी, हंसी, इत्यादि ।

नोट—'अवी' तन्त्री इत्यादि शब्दों के प्रथमा एकवचन में विसर्ग भी श्रूयमाण रहता है—

'अवी-तन्त्री-तरी-लक्ष्मी-धी-ह्री-श्रीणामुणादिषु ।
सप्तस्त्रीलिङ्गशब्दानां न सुलोपः कदाचन ॥'

| | | | |
|---|---|---|---|
| स० | धेन्वाम्-धेनौ | धेन्वोः | धेनुषु |
| सं० | हे धेनो | हे धेनू | हे धेनवः |

एवं चञ्चु-तनु-रज्जु-रेणु-लघु-स्नायु-हनु-इत्यादयः[1]।

## (११) ऊकारान्तः स्त्रीलिङ्गो 'वधू' शब्दः

| | | | |
|---|---|---|---|
| प्र० | वधूः | वध्वौ | वध्वः |
| द्वि० | वधूम् | वध्वौ | वधूः |
| तृ० | वध्वा | वधूभ्याम् | वधूभिः |
| च० | वध्वै | वधूभ्याम् | वधूभ्यः |
| पं० | वध्वाः | वधूभ्याम् | वधूभ्यः |
| ष० | वध्वाः | वध्वोः | वधूनाम् |
| स० | वध्वाम् | वध्वोः | वधूषु |
| सं० | हे वधु | हे वध्वौ | हे वध्वः |

एवं कर्कन्धू-चमू-चम्पू-तनू-पुनर्भू-प्रसू-वीरसू-श्वश्रू इत्यादयः[2]।

## (१२) ऋकारान्तः स्त्रीलिङ्गो 'मातृ' शब्दः

| | | | |
|---|---|---|---|
| प्र० | माता | मातरौ | मातरः |
| द्वि० | मातरम् | मातरौ | मातॄः |
| तृ० | मात्रा | मातृभ्याम् | मातृभिः |
| च० | मात्रे | मातृभ्याम् | मातृभ्यः |
| पं० | मातुः | मातृभ्याम् | मातृभ्यः |

१. उकारान्त 'क्रोष्टु' शब्द के रूप स्त्रीलिङ्ग में क्रोष्ट्री होने से ईकारान्त 'नदी' शब्द के समान होते हैं। दे० 'स्त्रियां च' तथा 'ऋन्नेभ्यो ङीप्' सू०।

२. ऊकारान्त भ्रू, भू और सुभ्रू शब्दों के रूप कुछ भिन्न होते हैं। यथा— भ्रूः भ्रुवौ भ्रुवः, भ्रुवम् भ्रुवौ भ्रुवः, भ्रुवा भ्रूभ्याम् भ्रूभिः, भ्रुवै-भ्रुवे भ्रूभ्याम् भ्रूभ्यः, भ्रुवाः-भ्रुवः भ्रूभ्यां-भ्रूभ्यः, भ्रुवाः भ्रुवः भ्रुवोः भ्रूणां-भ्रुवां, भ्रुवां-भ्रुवि भ्रुवोः भ्रूषु।

| | | | |
|---|---|---|---|
| ष० | मातुः | मात्रोः | मातॄणाम् |
| स० | मातरि | मात्रोः | मातृषु |
| सं० | हे मातः | हे मातरौ | हे मातरः |

एवं दुहितृ, ननान्दृ, यातृ, इत्यादयः ।

प्रश्नः—बालिका-तिथि-जननी-लघु-श्वश्रू-दुहितृशब्दानां षष्ठीविभक्तिषु रूपाणि प्रदर्श्य भ्रूशब्दस्य सर्वासु विभक्तिषु रूपाणि प्रदर्शयन्तु ।

## ( १३ ) अकारान्तो नपुंसकलिङ्गः 'फल' शब्दः

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र० | फलम् | फले | फलानि |
| द्वि० | फलम् | फले | फलानि |
| तृ० | फलेन | फलभ्याम् | फलैः |
| च० | फलाय | फलाभ्याम् | फलेभ्यः |
| पं० | फलात् | फलाभ्याम् | फलेभ्यः |
| ष० | फलस्य | फलयोः | फलानाम् |
| स० | फले | फलयोः | फलेषु |
| सं० | हे फल | हे फले | हे फलानि |

एवमन्येऽप्यकारान्ताः नपुंसकलिङ्गशब्दाः[1] ।

१. यथा—अमर, अग्र, अनृत, अन्ध अलीक, आसन, आस्पद, इन्द्रिय, उदर, उद्यान, उत्थान, ऋण, कनक, कलत्र, कारण, खाद्य, गगन, गीत, गृह, गोत्र, घृत चरित, चित्र, छिद्र, जठर, जल, तल्प, तीर्थ, दल, द्रव्य, दिन, धन, नगर, नेत्र, निधन, पत्त्र, पात्र, प्रधान, प्रसून, प्रणाम, बल, भव्य, भाग्य, मूल्य, यन्त्र, रन्ध्र, रहस्य, रत्न, लावण्य, वसन, वितान, विवर, वीर्य, शरण, शयन, शासन, शैत्य, सलिल, साधन, सुख, सङ्गत, हिरण्य, इत्यादि ।

## ( १४ ) इकारान्तो नपुंसकलिङ्गः 'वारि' शब्दः

| | | | |
|---|---|---|---|
| प्र० | वारि | वारिणी | वारीणि |
| द्वि० | वारि | वारिणी | वारीणि |
| तृ० | वारिणा | वारिभ्याम् | वारिभिः |
| च० | वारिणे | वारिभ्याम् | वारिभ्यः |
| पं० | वारिणः | वारिभ्याम् | वारिभ्यः |
| ष० | वारिणः | वारिणोः | वारीणाम् |
| स० | वारिणि | वारिणोः | वारिषु |
| सं० | हे वारे, वारि | हे वारिणी | हे वारीणि |

प्रायः इकरान्ताः नपुंसकलिङ्गशब्दाः 'वारि' शब्दवद् भवन्ति ।

## ( १५ ) उकारान्तो नपुंसकलिङ्गः 'मधु' शब्दः

| | | | |
|---|---|---|---|
| प्र० | मधु | मधुनी | मधूनि |
| द्वि० | मधु | मधुनी | मधूनि |
| तृ० | मधुना | मधुभ्याम् | मधुभिः |
| च० | मधुने | मधुभ्याम् | मधुभ्यः |
| पं० | मधुनः | मधुभ्याम् | मधुभ्यः |
| ष० | मधुनः | मधुनोः | मधूनाम् |
| स० | मधुनि | मधुनोः | मधुषु |
| सं० | हे मधो-मधु | हे मधुनी | हे मधूनि |

एवमन्येऽप्युकारान्ताः नपुंसकलिङ्गशब्दाः[1] ।

प्रश्न—'फल'शब्दसमानाकारकस्य यस्य कस्यापि शब्दस्य रूपाणि प्रदर्श्य 'दधि'शब्दस्य सप्तम्येकवचने रूपं विलिखन्तु ।

---

१. यथा—अम्बु अश्रु, अस्रु ( आँसू ), उरु, जतु ( लाह ), जानु, तालु, दारु (काष्ठ), मरु (ऊसर), वसु ( धन ) वस्तु, श्मश्रु ( दाढ़ी ), सानु इत्यादि ।

## ( १६ ) नकारान्तः पुँल्लिङ्गो 'गुणिन्' शब्दः

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र० | गुणी | गुणिनौ | गुणिनः |
| द्वि० | गुणिनम् | गुणिनौ | गुणिनः |
| तृ० | गुणिना | गुणिभ्याम् | गुणिभिः |
| च० | गुणिने | गुणिभ्याम् | गुणिभ्यः |
| पं० | गुणिनः | गुणिभ्याम् | गुणिभ्यः |
| ष० | गुणिनः | गुणिनोः | गुणिनाम् |
| स० | गुणिनि | गुणिनोः | गुणिषु |
| सं० | हे गुणिन् | हे गुणिनौ | हे गुणिनः |

एवमन्येऽपि इन्नन्ताः पुँल्लिङ्गशब्दाः[1] ।

## ( १७ ) शतृप्रत्ययान्तः पुँल्लिङ्गो 'गच्छत्' शब्दः

| | | | |
|---|---|---|---|
| प्र० | गच्छन् | गच्छन्तौ | गच्छन्तः |
| द्वि० | गच्छन्तम् | गच्छन्तौ | गच्छन्तः |
| तृ० | गच्छता | गच्छद्भ्याम् | गच्छद्भिः |
| च० | गच्छते | गच्छद्भ्याम् | गच्छद्भ्यः |
| पं० | गच्छतः | गच्छद्भ्याम् | गच्छद्भ्यः |
| ष० | गच्छतः | गच्छतोः | गच्छताम् |
| स० | गच्छति | गच्छतोः | गच्छत्सु |
| सं० | हे गच्छन् | हे गच्छन्तौ | हे गच्छन्तः |

एवमेवान्येऽपि शतृप्रत्ययान्ताः पुँल्लिङ्गशब्दाः[2] ।

---

१. यथा—अर्थिन्, आत्मघातिन्, एकाकिन्, कञ्चुकिन्, करिन्, कुटुम्बिन्, कुशलिन्, गृहिन्, चक्रवर्तिन्, ज्ञानिन्, तपस्विन्, दूरदर्शिन्, द्वेषिन्, धनिन्, पक्षिन्, बलिन्, बाजिन्, मन्त्रिन्, मनोहारिन्, मनीषिन्, मेधाविन्, रोगिन्, वैरिन्, साक्षिन्, स्वामिन्, इत्यादि ( पथिन्, मथिन्, और ऋभुक्षिन् शब्दों के रूप कुछ भिन्न होते हैं । दे० 'पथिमथ्यृभुक्षामात्' सू० ।

२. यथा—इच्छत्, कुर्वत्, गायत्, गृह्णत्, तिष्ठत्, द्विषत्, धावत्, नृत्यत्, पश्यत्, पिबत्, भवत्, ( भगवत् ), शृण्वत्, इत्यादि ।

## ( १८ ) डवतुप्रत्ययान्तः पुँल्लिङ्गो 'भवत्' शब्दः

| | | | |
|---|---|---|---|
| प्र० | भवान् | भवन्तौ | भवन्तः |
| द्वि० | भवन्तम् | भवन्तौ | भवन्तः |
| तृ० | भवता | भवद्भ्याम् | भवद्भिः |
| च० | भवते | भवद्भ्याम् | भवद्भ्यः |
| पं० | भवतः | भवद्भ्याम् | भवद्भ्यः |
| ष० | भवतः | भवतोः | भवताम् |
| स० | भवति | भवतोः | भवत्सु |
| सं० | हे भवन् | हे भवन्तौ | हे भवन्तः |

एवं मतुवन्तादयोप्यन्ये शब्दाः[1] ।

## ( १९ ) पुंल्लिङ्गो 'महत्' शब्दः

| | | |
|---|---|---|
| महान् | महान्तौ | महान्तः |
| महान्तम् | महान्तौ | महतः |

शेषं 'भवत्' शब्दवत् ।

## ( २० ) नान्तः पुँल्लिङ्गः 'आत्मन्' शब्दः

| | | | |
|---|---|---|---|
| प्र० | आत्मा | आत्मानौ | आत्मानः |
| द्वि० | आत्मानम् | आत्मानौ | आत्मनः |
| तृ० | आत्मना | आत्मभ्याम् | आत्मभिः |
| च० | आत्मने | आत्मभ्याम् | आत्मभ्यः |
| पं० | आत्मनः | आत्मभ्याम् | आत्मभ्यः |

---

१. यथा—'मत्'प्रत्ययान्ताः-अंशुमत्, आयुष्मत्, ज्योतिष्मत्, दीप्तिमत्, धनुष्मत्, धीमत्, भानुमत्, मतिमत्, बुद्धिमत्, हनुमत्, इत्यादि। तथा 'वत्'प्रत्ययान्ताः—एतावत्, तावत्, नभस्वत्, प्रज्ञावत्, बलवत्, भगवत्, भास्वत्, यावत्, लज्जावत्, विद्यावत्, विवस्वत्, इत्यादि। एवं 'तवत् प्रत्ययान्ताः—उक्तवत्, कृतवत्, गतवत्, जितवत्, ज्ञानवत्, दृष्टवत्, श्रुतवत्, स्थितवत्, इत्यादि।

| | | | |
|---|---|---|---|
| ष० | आत्मनः | आत्मनोः | आत्मनाम् |
| स० | आत्मनि | आत्मनोः | आत्मसु |
| सं० | हे आत्मन् | हे आत्मानौ | हे आत्मानः |

एवम्—अर्वन्, अश्मन्, द्विजन्मन्, यज्वन्, ब्रह्मन् इत्यादयः।

## ( २१ ) नान्तः पुंल्लिङ्गो 'राजन्' शब्दः

| | | | |
|---|---|---|---|
| प्र० | राजा | राजानौ | राजानः |
| द्वि० | राजानम् | राजानौ | राज्ञः |
| तृ० | राज्ञा | राजभ्याम् | राजभिः |
| च० | राज्ञे | राजभ्याम् | राजभ्यः |
| पं० | राज्ञः | राजभ्याम् | राजभ्यः |
| ष० | राज्ञः | राज्ञोः | राज्ञाम् |
| स० | राज्ञि-राजनि | राज्ञोः | राजसु |
| सं० | हे राजन् | हे राजानौ | हे राजानः |

## ( २२ ) जकारान्तः पुंल्लिङ्गो 'वणिज्' शब्दः

| | | | |
|---|---|---|---|
| प्र० | वणिक् | वणिजौ | वणिजः |
| द्वि० | वणिजम् | वणिजौ | वणिजः |
| तृ० | वणिजा | वणिग्भ्याम् | वणिग्भिः |
| च० | वणिजे | वणिग्भ्याम् | वणिग्भ्यः |
| पं० | वणिजः | वणिग्भ्याम् | वणिग्भ्यः |
| ष० | वणिजः | वणिजोः | वणिजाम् |
| स० | वणिजि | वणिजोः | वणिक्षु |
| सं० | हे वणिक् | हे वणिजौ | हे वणिजः |

## ( २३ ) सकारान्तः पुंल्लिङ्गो 'विद्वस्' शब्दः

| | | | |
|---|---|---|---|
| प्र० | विद्वान् | विद्वांसौ | विद्वांसः |
| द्वि० | विद्वांसम् | विद्वांसौ | विदुषः |
| तृ० | विदुषा | विद्वद्भ्याम् | विद्वद्भिः |

| | | | |
|---|---|---|---|
| च० | विदुषे | विद्वद्भ्याम् | विद्वद्भ्यः |
| पं० | विदुषः | विद्वद्भ्याम् | विद्वद्भ्यः |
| ष० | विदुषः | विदुषोः | विदुषाम् |
| स० | विदुषि | विदुषोः | विद्वत्सु |
| सं० | हे विद्वन् | हे विद्वांसौ | हे विद्वांसः |

एवं वस्प्रत्ययान्ताः अन्येऽपि शब्दाः प्रायः 'विद्वस्' शब्दवद् भवन्ति ।

### ( २४ ) अकारान्तः पुँल्लिङ्गः 'सर्व' शब्दः

| | | | |
|---|---|---|---|
| प्र० | सर्वः | सर्वौ | सर्वे |
| द्वि० | सर्वम् | सर्वौ | सर्वान् |
| तृ० | सर्वेण | सर्वाभ्याम् | सर्वैः |
| च० | सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः |
| पं० | सर्वस्मात् | सर्वाभ्याम् | सर्वेभ्यः |
| ष० | सर्वस्य | सर्वयोः | सर्वेषाम् |
| स० | सर्वस्मिन् | सर्वयोः | सर्वेषु |
| सं० | हे सर्व | हे सर्वौ | हे सर्वे |

### ( २५ ) त्रिषु लिङ्गेषु समानो दकारान्तः 'युष्मद्' शब्दः

| | | | |
|---|---|---|---|
| प्र० | त्वम् | युवाम् | यूयम् |
| द्वि० | त्वाम् (त्वा) | युवाम् (वाम्) | युष्मान् (वः) |
| तृ० | त्वया | युवाभ्याम् | युष्माभिः |
| च० | तुभ्यम् ( ते ) | युवाभ्याम् (वाम्) | युष्मभ्यम् (वः) |
| पं० | त्वत् | युवाभ्याम् | युष्मत् |
| ष० | तव ( ते ) | युवयोः (वाम्) | युष्माकम् (वः) |
| स० | त्वयि | युवयोः | युष्मासु |

### ( २६ ) त्रिषु लिङ्गेषु समानो दकारान्तः 'अस्मद्' शब्दः

| | | | |
|---|---|---|---|
| प्र० | अहम् | आवाम् | वयम् |
| द्वि० | माम् ( मा ) | आवाम् ( नौ ) | अस्मान् ( नः ) |

| | | | |
|---|---|---|---|
| तृ० | मया | आवाभ्याम् | अस्माभिः |
| च० | मह्यम् ( मे ) | आवाभ्याम् ( नौ ) | अस्मभ्यम् ( नः ) |
| पं० | मत् | आवाभ्याम् | अस्मत् |
| ष० | मम ( मे ) | आवयोः ( नौ ) | अस्माकम् ( नः ) |
| स० | मयि | आवयोः | अस्मासु |

नोट—युष्मद्, अस्मद्, यद्, तद्, किम्, इदम्, एक और द्वि शब्दों के सम्बोधन नहीं होते। दे० 'त्यदादेः सम्बोधनं नास्ति'।

## ( २७ ) दकारान्तः 'यद्' शब्दः

| पुँल्लिङ्गे— | | | स्त्रीलिङ्गे— | | |
|---|---|---|---|---|---|
| यः | यौ | ये | या | ये | याः |
| यम् | यौ | यान् | याम् | ये | याः |
| येन | याभ्याम् | यैः | यया | याभ्याम् | याभिः |
| यस्मै | याभ्याम् | येभ्यः | यस्यै | याभ्याम् | याभ्यः |
| यस्मात् | याभ्याम् | येभ्यः | यस्याः | याभ्याम् | याभ्यः |
| यस्य | ययोः | येषाम् | यस्याः | ययोः | यासाम् |
| यस्मिन् | ययोः | येषु | यस्याम् | ययोः | यासु |

नपुंसके—यत्　ये　यानि।　यत्　ये　यानि। शेषं पुंवत्।

## ( २८ ) दकारान्तः 'तद्' शब्दः

| पुंल्लिङ्गे— | | | स्त्रीलिङ्गे— | | |
|---|---|---|---|---|---|
| सः | तौ | ते | सा | ते | ताः |
| तम् | तौ | तान् | ताम् | ते | ताः |
| तेन | ताभ्याम् | तैः | तया | ताभ्याम् | ताभिः |
| तस्मै | ताभ्याम् | तेभ्यः | तस्यै | ताभ्याम् | ताभ्यः |
| तस्मात् | ताभ्याम् | तेभ्यः | तस्याः | ताभ्याम् | ताभ्यः |
| तस्य | तयोः | तेषाम् | तस्याः | तयोः | तासाम् |
| तस्मिन् | तयोः | तेषु | तस्याम् | तयोः | तासु |

नपुंसके—तत्　ते　तानि।　तत्　ते　तानि। शेषं पुंवत्।

## ( २९ ) मकारान्तः 'किम्' शब्दः

| पुँल्लिङ्गे— | | | स्त्रीलिङ्गे— | | |
|---|---|---|---|---|---|
| कः | कौ | के | का | के | काः |
| कम् | कौ | कान् | काम् | के | काः |
| केन | काभ्याम् | कैः | कया | काभ्याम् | काभिः |
| कस्मै | काभ्याम् | केभ्यः | कस्यै | काभ्याम् | काभ्यः |
| कस्मात् | काभ्याम् | केभ्यः | कस्याः | काभ्याम् | काभ्यः |
| कस्य | कयोः | केषाम् | कस्याः | कयोः | कासाम् |
| कस्मिन् | कयोः | केषु | कस्याम् | कयोः | कासु |

नपुंसके—किम् के कानि। किम् के कानि। शेषं पुंवत्।

## ( ३० ) मकारान्तः 'इदम्' शब्दः

पुँल्लिङ्गे—

| | | | |
|---|---|---|---|
| प्र० | अयम् | इमौ | इमे |
| द्वि० | इमम् | इमौ | इमान् |
| तृ० | अनेन | आभ्याम् | एभिः |
| च० | अस्मै | आभ्याम् | एभ्यः |
| पं० | अस्मात् | आभ्याम् | एभ्यः |
| ष० | अस्य | अनयोः | एषाम् |
| स० | अस्मिन् | अनयोः | एषु |

स्त्रीलिङ्गे—

| | | | |
|---|---|---|---|
| प्र० | इयम् | इमे | इमाः |
| द्वि० | इमाम् | इमे | इमाः |
| तृ० | अनया | आभ्याम् | आभिः |
| च० | अस्यै | आभ्याम् | आभ्यः |
| पं० | अस्याः | आभ्याम् | आभ्यः |
| ष० | अस्याः | अनयोः | आसाम् |
| स० | अस्याम् | अनयोः | आसु |

नपुंसके—इदम् इमे इमानि। इदम् इमे इमानि। शेषं पुंवत्।

## ( ३१ ) अकारान्तः 'एक' शब्दः

( 'एक शब्दः संख्यायां[1] तु नित्यैकवचनान्तः )

पुंल्लिङ्गे—

| | | | |
|---|---|---|---|
| प्र० | एकः | एकौ | एके |
| द्वि० | एकम् | एकौ | एकान् |
| तृ० | एकेन | एकाभ्याम् | एकैः |
| च० | एकस्मै | एकाभ्याम् | एकेभ्यः |
| पं० | एकस्मात् | एकाभ्याम् | एकेभ्यः |
| ष० | एकस्य | एकयोः | एकेषाम् |
| स० | एकस्मिन् | एकयोः | एकेषु |

स्त्रीलिङ्गे—

| | | | |
|---|---|---|---|
| प्र० | एका | एके | एकाः |
| द्वि० | एकाम् | एके | एकाः |
| तृ० | एकया | एकाभ्याम् | एकाभिः |
| च० | एकस्यै | एकाभ्याम् | एकाभ्यः |
| पं० | एकस्याः | एकाभ्याम् | एकाभ्यः |
| ष० | एकस्याः | एकयोः | एकासाम् |
| सं० | एकस्याम् | एकयोः | एकासु |

नपुंसके—एकम् एके एकानि। एकम् एके एकानि। शेषं पुंवत्।

## ( ३२ ) नित्यं द्विवचनान्तो 'द्वि' शब्दः

पुंल्लिङ्गे—द्वौ द्वौ द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः

स्त्रीलिङ्गे—द्वे द्वे द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयो

नपुंसके—( स्त्रीलिङ्गवत् )

१. विशिष्टार्थे तु एक-द्वि-बहुवचनान्तोऽपि। यथा—'इत्येके आचार्याः'।

## ( ३३ ) नित्यं बहुवचनान्तः 'त्रि' शब्दः

| | पुँल्लिङ्गे | स्त्रीलिङ्गे | नपुंसके |
|---|---|---|---|
| प्र० | त्रयः | तिस्रः | त्रीणि |
| द्वि० | त्रीन् | तिस्रः | त्रीणि |
| तृ० | त्रिभिः | तिसृभिः | त्रिभिः |
| च० | त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| पं० | त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| ष० | त्रयाणाम् | तिसृणाम् | त्रयाणाम् |
| सं० | त्रिषु | तिसृषु | त्रिषु |

## ( ३४ ) नित्यं बहुवचनान्तः 'चतुर्' शब्दः

| | पुँल्लिङ्गे | स्त्रीलिङ्गे | नपुंसके |
|---|---|---|---|
| प्र० | चत्वारः | चतस्रः | चत्वारि |
| द्वि० | चतुरः | चतस्रः | चत्वारि |
| तृ० | चतुर्भिः | चतसृभिः | चतुर्भिः |
| च० | चतुर्भ्यः | चतसृभ्यः | चतुर्भ्यः |
| पं० | चतुर्भ्यः | चतसृभ्यः | चतुर्भ्यः |
| ष० | चतुर्णाम् | चतसृणाम् | चतुर्णाम् |
| स० | चतुर्षु | चतसृषु | चतुर्षु |

## ( ३५ ) त्रिषु लिङ्गेषु समानो नित्यं बहुवचनान्तः 'पञ्चन्' शब्दः

पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः पञ्चानाम् पञ्चसु

प्रश्नः—ज्ञानिन्-वणिज्-अस्मद्-शब्दानां सर्वासु विभक्तिषु रूपाणि विलिख्य शतृप्रत्ययान्त-डवतुप्रत्ययान्तयोः भवत्-शब्दयोः प्रथमैकवचने रूपं प्रदर्श्यताम्

इति सुबन्तप्रकरणं समाप्तम्

# तिङन्त-प्रकरणम्

[ काल का ज्ञान तथा विधि आदि का अर्थज्ञान कराने के लिये धातु के बाद लट् आदि १० लकार[1] होते हैं। प्रयोग-कल में दसों गणों की धातुओं के उत्तर लकार के स्थान पर जो 'तिङ्' विभक्ति होती है, उसके योग से बना हुआ पद ( शब्द ) 'तिङन्त' कहलाता है।

अनुशीलनो कारिका

भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च।
तुदादिश्च रुधादिश्च तनुक्र्यादिचुरादयः॥
एते दश गणाः प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः।
लङ् वर्तमाने लेङ् वेदे भूते लिङ्-लङ्-लुङ्स्तथा॥
विध्याशिषोर्लिङौ लोट् च लुङ्-लृटौ च भविष्यति।
लृङ् क्रियाया अनिष्पत्तौ लकारा दश कीर्तिताः॥

( १ ) पा ( पीना )

## लट्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र० पु० | पिबति | पिबतः | पिबन्ति |
| म० पु० | पिबसि | पिबथः | पिबथ |
| उ० पु० | पिबामि | पिबावः | पिबामः |

## लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | पास्यति | पास्यतः | पास्यन्ति |
| म० पु० | पास्यसि | पास्यथः | पास्यथ |
| उ० पु० | पास्यामि | पास्यावः | पास्यामः |

## लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | पिबतु, पिबतात् | पिबताम् | पिबन्तु |
| म० पु० | पिब ,, | पिबतम् | पिबत |
| उ० पु० | पिबानि | पिबाव | पिबाम |

---

१. संस्कृत भाषा का व्यावहारिक बोध कराने के उद्देश्य से धातुओं के केवल ५ लकारों के ही रूप इस पुस्तक में दिए जा रहे हैं। ( दस लकारों के रूप 'रूपचन्द्रिका' में देखें )

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अपिबत् | अपिबताम् | अपिबन् |
| म० पु० | अपिबः | अपिबतम् | अपिबत |
| उ० पु० | अपिबम् | अपिबाव | अपिबाम |

विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | पिबेत् | पिबेताम् | पिबेयुः |
| म० पु० | पिबेः | पिबेतम् | पिबेत |
| उ० पु० | पिबेयम् | पिबेव | पिबेम |

शुद्धं कुरु—त्वं दुग्धं पिबतु। अहं जलं पास्यावः। भवन्तः सर्पिः पिब।

( २ ) घ्रा ( सूंघना )

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | जिघ्रति | जिघ्रतः | जिघ्रन्ति |
| म० पु० | जिघ्रसि | जिघ्रथः | जिघ्रथ |
| उ० पु० | जिघ्रामि | जिघ्रावः | जिघ्रामः |

लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | घ्रास्यति | घ्रास्यतः | घ्रास्यन्ति |
| म० पु० | घ्रास्यसि | घ्रास्यथः | घ्रास्यथ |
| उ० पु० | घ्रास्यामि | घ्रास्यावः | घ्रास्यामः |

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | जिघ्रतु जिघ्रतात् | जिघ्रताम् | जिघ्रन्तु |
| म० पु० | जिघ्र " | जिघ्रतम् | जिघ्रत |
| उ० पु० | जिघ्राणि | जिघ्राव | जिघ्राम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अजिघ्रत् | अजिघ्रताम् | अजिघ्रन् |
| म० पु० | अजिघ्रः | अजिघ्रतम् | अजिघ्रत |
| उ० पु० | अजिघ्रम् | अजिघ्राव | अजिघ्राम |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | जिघ्रेत् | जिघ्रेताम् | जिघ्रेयुः |
| म० पु० | जिघ्रेः | जिघ्रेतम् | जिघ्रेत |
| उ० पु० | जिघ्रेयम् | जिघ्रेव | जिघ्रेम |

शुद्धं कुरु---भवान् पुष्पाणि जिघ्रन्ति। बालका आम्राणि जिघ्रति।

## ( ३ ) स्था ( ठहरना )

### लट्

| | | | |
|---|---|---|---|
| प्र० पु० | तिष्ठति | तिष्ठतः | तिष्ठन्ति |
| म० पु० | तिष्ठसि | तिष्ठथः | तिष्ठथ |
| उ० पु० | तिष्ठामि | तिष्ठावः | तिष्ठामः |

### लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | स्थास्यति | स्थास्यतः | स्थास्यन्ति |
| म० पु० | स्थास्यसि | स्थास्यथः | स्थास्यथ |
| उ० पु० | स्थास्यामि | स्थास्यावः | स्थास्यामः |

### लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | तिष्ठतु-तिष्ठतात् | तिष्ठताम् | तिष्ठन्तु |
| म० पु० | तिष्ठ ,, | तिष्ठतम् | तिष्ठत |
| उ० पु० | तिष्ठानि | तिष्ठाव | तिष्ठाम |

### लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अतिष्ठत् | अतिष्ठताम् | अतिष्ठन् |
| म० पु० | अतिष्ठः | अतिष्ठतम् | अतिष्ठत |
| उ० पु० | अतिष्ठम् | अतिष्ठाव | अतिष्ठाम |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | तिष्ठेत् | तिष्ठेताम् | तिष्ठेयुः |
| म० पु० | तिष्ठेः | तिष्ठेतम् | तिष्ठेत |
| उ० पु० | तिष्ठेयम् | तिष्ठेव | तिष्ठेम |

शुद्धं कुरु—अहं तिष्ठति, भवन्तावपि तावत् तिष्ठन्तु, धावन्तावश्वौ यावन्न स्थास्यन्ति ।

## ( ४ ) जि ( जितना )

### लट्

| | | | |
|---|---|---|---|
| प्र० पु० | जयति | जयतः | जयन्ति |
| म० पु० | जयसि | जयथः | जयथ |
| उ० पु० | जयामि | जयावः | जयामः |

### लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | जेष्यति | जेष्यतः | जेष्यन्ति |
| म० पु० | जेष्यसि | जेष्यथः | जेष्यथ |
| उ० पु० | जेष्यामि | जेष्यावः | जेष्यामः |

### लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | जयतु-जयतात् | जयताम् | जयन्तु |
| म० पु० | जय ,, | जयतम् | जयत |
| उ० पु० | जयानि | जयाव | जयाम |

### लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अजयत् | अजयताम् | अजयन् |
| म० पु० | अजयः | अजयतम् | अजयत |
| उ० पु० | अजयम् | अजयाव | अजयाम |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | जयेत् | जयेताम् | जयेयुः |
| म० पु० | जयेः | जयेतम् | जयेत |
| उ० पु० | जयेयम् | जयेव | जयेम |

शुद्धं कुरु—वयं जेष्यन्ति चेद्, युवां जेष्यथ । जेष्यति अजयतां वा गुरवः ।

## ( ५ ) भू ( होना )

### लट्

| | | | |
|---|---|---|---|
| प्र० पु० | भवति | भवतः | भवन्ति |
| म० पु० | भवसि | भवथः | भवथ |
| उ० पु० | भवामि | भवावः | भवामः |

### लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | भविष्यति | भविष्यतः | भविष्यन्ति |
| म० पु० | भविष्यसि | भविष्यथः | भविष्यथ |
| उ० पु० | भविष्यामि | भविष्यावः | भविष्यामः |

### लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | भवतु-भवतात् | भवताम् | भवन्तु |
| म० पु० | भव ,, | भवतम् | भवत |
| उ० पु० | भवानि | भवाव | भवाम |

### लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अभवत् | अभवताम् | अभवन् |
| म० पु० | अभवः | अभवतम् | अभवत |
| उ० पु० | अभवम् | अभवाव | अभवाम |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | भवेत् | भवेताम् | भवेयुः |
| म० पु० | भवेः | भवेतम् | भवेत |
| उ० पु० | भवेयम् | भवेव | भवेम |

**शुद्धं कुरु**—त्वं श्रमी भवति । अहं दुःखो मवावः । ते चिरजोवी भवतु ।

## ( ६ ) हृ ( चुराना )

### लट्

| | | | |
|---|---|---|---|
| प्र० पु० | हरति | हरतः | हरन्ति |
| म० पु० | हरसि | हरथः | हरथ |
| उ० पु० | हरामि | हरावः | हरामः |

### लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | हरिष्यति | हरिष्यतः | हरिष्यन्ति |
| म० पु० | हरिष्यसि | हरिष्यथः | हरिष्यथ |
| उ० पु० | हरिष्यामि | हरिष्यावः | हरिष्यामः |

## लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | हरतु-हरतात् | हरताम् | हरन्तु |
| म० पु० | हर ,, | हरतम् | हरत |
| उ० पु० | हराणि | हराव | हराम |

## लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अहरत् | अहरताम् | अहरन् |
| म० पु० | अहरः | अहरतम् | अहरत |
| उ० पु० | अहरम् | अहराव | अहराम |

## विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | हरेत् | हरेताम् | हरेयुः |
| म० पु० | हरेः | हरेतम् | हरेत |
| उ० पु० | हरेयम् | हरेव | हरेम |

शुद्धं कुरु—पुस्तकं हरिष्यति चेत् पुण्यं हरेतां तस्मात्त्वं पापं हरतु ।

### ( ७ ) पठ् ( पढ़ना )

## लट्

| | | | |
|---|---|---|---|
| प्र० पु० | पठति | पठतः | पठन्ति |
| म० पु० | पठसि | पठथः | पठथ |
| उ० पु० | पठामि | पठावः | पठामः |

## लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | पठिष्यति | पठिष्यतः | पठिष्यन्ति |
| म० पु० | पठिष्यसि | पठिष्यथः | पठिष्यथ |
| उ० पु० | पठिष्यामि | पठिष्यावः | पठिष्यामः |

## लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | पठतु-पठतात् | पठताम् | पठन्तु |
| म० पु० | पठ ,, | पठतम् | पठत |
| उ० पु० | पठानि | पठाव | पठाम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अपठत् | अपठताम् | अपठन् |
| म० पु० | अपठः | अपठतम् | अपठत |
| उ० पु० | अपठम् | अपठाव | अपठाम |

विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | पठेत् | पठेताम् | पठेयुः |
| म० पु० | पठेः | पठेतम् | पठेत |
| उ० पु० | पठेयम् | पठेव | पठेम |

शुद्धं कुरु— त्व पठति, अहं त्वमपठाम । त्वं पठताम्, वयमपि पठेव ।

(८) वस् ( निवास करना )

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | वसति | वसतः | वसन्ति |
| म० पु० | वससि | वसथः | वसथ |
| उ० पु० | वसामि | वसावः | वसामः |

लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | वत्स्यति | वत्स्यतः | वत्स्यन्ति |
| म० पु० | वत्स्यसि | वत्स्यथः | वत्स्यथ |
| उ० पु० | वत्स्यामि | वत्स्यावः | वत्स्यामः |

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | वसतु-वसतात् | वसताम् | वसन्तु |
| म० पु० | वस ,, | वसतम् | वसत |
| उ० पु० | वसानि | वसाव | वसाम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अवसत् | अवसताम् | अवसन् |
| म० पु० | अवसः | अवसतम् | अवसत |
| उ० पु० | अवसम् | अवसाव | अवसाम |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | वसेत् | वसेताम् | वसेयुः |
| म० पु० | वसेः | वसेतम् | वसेत |
| उ० पु० | वसेयम् | वसेव | वसेम |

शुद्धं कुरु—यूयं वसतः, वयमपि वत्स्यावः । गुरवस्त्ववसत् ।

## ( ६ ) गम् ( जाना )

### लट्

| | | | |
|---|---|---|---|
| प्र० पु० | गच्छति | गच्छतः | गच्छन्ति |
| म० पु० | गच्छसि | गच्छथः | गच्छथ |
| उ० पु० | गच्छामि | गच्छावः | गच्छामः |

### लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | गमिष्यति | गमिष्यतः | गमिष्यन्ति |
| म० पु० | गमिष्यसि | गमिष्यथः | गमिष्यथ |
| उ० पु० | गमिष्यामि | गमिष्यावः | गमिष्यामः |

### लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | गच्छतु-गच्छतात् | गच्छताम् | गच्छन्तु |
| म० पु० | गच्छ ,, | गच्छतम् | गच्छत |
| उ० पु० | गच्छानि | गच्छाव | गच्छाम |

### लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अगच्छत् | अगच्छताम् | अगच्छन् |
| म० पु० | अगच्छः | अगच्छतम् | अगच्छत |
| उ० पु० | अगच्छम् | अगच्छाव | अगच्छाम |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | गच्छेत् | गच्छेताम् | गच्छेयुः |
| म० पु० | गच्छेः | गच्छेतम् | गच्छेत |
| उ० पु० | गच्छेयम् | गच्छेव | गच्छेम |

शुद्धं कुरु—त्वं गच्छति गमिष्यति वा, वयं तु गच्छावः ।

( १० दृश् ) ( देखना )

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | पश्यति | पश्यतः | पश्यन्ति |
| म० पु० | पश्यसि | पश्यथः | पश्यथ |
| उ० पु० | पश्यामि | पश्यावः | पश्यामः |

लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | द्रक्ष्यति | द्रक्ष्यतः | द्रक्ष्यन्ति |
| म० पु० | द्रक्ष्यसि | द्रक्ष्यथः | द्रक्ष्यथ |
| उ० पु० | द्रक्ष्यामि | द्रक्ष्यावः | द्रक्ष्यामः |

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | पश्यतु-पश्यतात् | पश्यताम् | पश्यन्तु |
| म० पु० | पश्य ,, | पश्यतम् | पश्यत |
| उ० पु० | पश्यानि | पश्याव | पश्याम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अपश्यत् | अपश्यताम् | अपश्यन् |
| म० पु० | अपश्यः | अपश्यतम् | अपश्यत |
| उ० पु० | अपश्यम् | अपश्याव | अपश्याम |

विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | पश्येत् | पश्येताम् | पश्येयुः |
| म० पु० | पश्येः | पश्येतम् | पश्येत |
| उ० पु० | पश्येयम् | पश्येव | पश्येम |

शुद्धं कुरु—दृश्यन्तु भवन्तः, देवो द्रक्षिष्यति चेत्, अहमपि द्रक्ष्यावः ।

( ११ ) लभ् ( पीना )

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | लभते | लभेते | लभन्ते |
| म० पु० | लभसे | लभेथे | लभध्वे |
| उ० पु० | लभे | लभावहे | लभामहे |

लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | लप्स्यते | लप्स्येते | लप्स्यन्ते |
| म० पु० | लप्स्यसे | लप्स्येथे | लप्स्यध्वे |
| उ० पु० | लप्स्ये | लप्स्यावहे | लप्स्यामहे |

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | लभताम् | लभेताम् | लभन्ताम् |
| म० पु० | लभस्व | लभेथाम् | लभध्वम् |
| उ० पु० | लभै | लभावहै | लभामहै |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अलभत | अलभेताम् | अलभन्त |
| म० पु० | अलभथाः | अलभेथाम् | अलभध्वम् |
| उ० पु० | अलभे | अलभावहि | अलभामहि |

विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | लभेत | लभेयाताम् | लभेरन् |
| म० पु० | लभेथाः | लभेयाथाम् | लभेध्वम् |
| उ० पु० | लभेय | लभेवहि | लभेमहि |

शुद्धं कुरु---द्रव्यं लभते चेल्लभतां भवन्तः, वयं तु प्रागेव अलभावहि।

( १२ ) कृ ( करना )

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | करोति | कुरुतः | कुर्वन्ति |
| म० पु० | करोषि | कुरुथः | कुरुथ |
| उ० पु० | करोमि | कुर्वः | कुर्मः |

लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | करिष्यति | करिष्यतः | करिष्यन्ति |
| म० पु० | करिष्यसि | कारिष्यथ | करिष्यथ |
| उ० पु० | करिष्यामि | करिष्यावः | करिष्यामः |

### लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | करोतु-कुरुतात् | कुरुताम् | कुर्वन्तु |
| म० पु० | कुरु ,, | कुरुतम् | कुरुत |
| उ० पु० | करवाणि | करवाव | करवाम |

### लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अकरोत् | अकुरुताम् | अकुर्वन् |
| म० पु० | अकरोः | अकुरुतम् | अकुरुत |
| उ० पु० | अकरवम् | अकुर्व | अकुर्म |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | कुर्यात् | कुर्याताम् | कुर्युः |
| म० पु० | कुर्याः | कुर्यातम् | कुर्यात |
| उ० पु० | कुर्याम् | कुर्याव | कुर्याम |

## आत्मनेपदे

### लट्

| | | | |
|---|---|---|---|
| प्र० पु० | कुरुते | कुर्वाते | कुर्वते |
| म० पु० | कुरुषे | कुर्वाथे | कुरुध्वे |
| उ० पु० | कुर्वे | कुर्वहे | कुर्महे |

### लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | करिष्यते | करिष्येते | करिष्यन्ते |
| म० पु० | करिष्यसे | करिष्येथे | करिष्यध्वे |
| उ० पु० | करिष्ये | करिष्यावहे | करिष्यामहे |

### लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | कुरुताम् | कुर्वाताम् | कुर्वताम् |
| म० पु० | कुरुष्व | कुर्वाथाम् | कुरुध्वम् |
| उ० पु० | करवै | करवावहै | करवामहै |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अकुरुत | अकुर्वाताम् | अकुर्वत |
| म० पु० | अकुरुथाः | अकुर्वाथाम् | अकुरुध्वम् |
| उ० पु० | अकुर्वि | अकुर्वहि | अकुर्महि |

विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | कुर्वीत | कुर्वीयाताम् | कुर्वीरन् |
| म० पु० | कुर्वीथाः | कुर्वीयाथाम् | कुर्वीध्वम् |
| उ० पु० | कुर्वीय | कुर्वीवहि | कुर्वीमहि |

शुद्धं कुरु—किं करोति त्वम्, वयमपि तत् करिष्यावः, तेऽपि तत् करोतु ।

( १३ ) अस् ( होना )

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | अस्ति | स्तः | सन्ति |
| म० पु० | असि | स्थः | स्थ |
| उ० पु० | अस्मि | स्वः | स्मः |

लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | भविष्यति | भविष्यतः | भविष्यन्ति |
| म० पु० | भविष्यसि | भविष्यथः | भविष्यथ |
| उ० पु० | भविष्यामि | भविष्यावः | भविष्यामः |

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | अस्तु-स्तात् | स्ताम् | सन्तु |
| म० पु० | एधि ,, | स्तम् | स्त |
| उ० पु० | असानि | असाव | असाम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | आसीत् | आस्ताम् | आसन् |
| म० पु० | आसीः | आस्तम् | आस्त |
| उ० पु० | आसम् | आस्व | आस्म |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | स्यात् | स्याताम् | स्युः |
| म० पु० | स्याः | स्यातम् | स्यात |
| उ० पु० | स्याम् | स्वाव | स्याम |

शुद्धं कुरु--देवः सन्ति चेत्, तेऽपि भविष्यथ। आसीत् पुरा नरपतयः।

## ( १४ ) प्रच्छ् ( पूछना )

### लट्

| | | | |
|---|---|---|---|
| प्र० पु० | पृच्छति | पृच्छतः | पृच्छन्ति |
| म० पु० | पृच्छसि | पृच्छथः | पृच्छथ |
| उ० पु० | पृच्छामि | पृच्छावः | पृच्छामः |

### लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | प्रक्ष्यति | प्रक्ष्यतः | प्रक्ष्यन्ति |
| म० पु० | प्रक्ष्यसि | प्रक्ष्यथः | प्रक्ष्यथ |
| उ० पु० | प्रक्ष्यामि | प्रक्ष्यावः | प्रक्ष्यामः |

### लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | पृच्छतु-पृच्छतात् | पृच्छताम् | पृच्छन्तु |
| म० पु० | पृच्छ ,, | पृच्छतम् | पृच्छत |
| उ० पु० | पृच्छानि | पृच्छाव | पृच्छाम |

### लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अपृच्छत् | अपृच्छताम् | अपृच्छन् |
| म० पु० | अपृच्छः | अपृच्छतम् | अपृच्छत |
| उ० पु० | अपृच्छम् | अपृच्छाव | अपृच्छाम |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | पृच्छेत् | पृच्छेताम् | पृच्छेयुः |
| म० पु० | पृच्छेः | पृच्छेतम् | पृच्छेत |
| उ० पु० | पृच्छेयम् | पृच्छेव | पृच्छेम |

शुद्धं कुरु—पृच्छन्तु भवान्, वयमपि पृच्छामि। गुरवस्त्वपृच्छत्।

## ( १५ ) क्री ( खरीदना)

### लट्

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणाति | क्रीणीतः | क्रीणन्ति |
| म० पु० | क्रीणासि | क्रीणीथः | क्रीणीथ |
| उ० पु० | क्रीणामि | क्रीणीवः | क्रीणीमः |

### लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | क्रेष्यति | क्रेष्येतः | क्रेष्यन्ति |
| म० पु० | क्रेष्यति | क्रेष्यथः | क्रेष्यथ |
| उ० पु० | क्रेष्यामि | क्रेष्यावः | क्रेष्यामः |

### लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणातु-क्रीणीतात् | क्रीणीताम् | क्रीणन्तु |
| म० पु० | क्रीणीहि ,, | क्रीणीतम् | क्रीणीत |
| उ० पु० | क्रीणानि | क्रीणाव | क्रीणाम |

### लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अक्रीणात् | अक्रीणीताम् | अक्रीणन् |
| म० पु० | अक्रीणाः | अक्रीणीतम् | अक्रीणीत |
| उ० पु० | अक्रीणाम् | अक्रीणीव | अक्रीणीम |

### विधि-लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणीयात् | क्रीणीयाताम् | क्रीणीयुः |
| म० पु० | क्रीणीयाः | क्रीणीयातम् | क्रीणीयात |
| उ० पु० | क्रीणीयाम् | क्रीणीयाव | क्रीणीयाम |

### आत्मनेपदे

| | | | | |
|---|---|---|---|---|
| लट्— | क्रीणीते | क्रीणाते | क्रीणते | इत्यादि |
| लृट्— | क्रेष्यते | क्रेष्येते | क्रेष्यन्ते | ,, |
| लोट्— | क्रीणीताम् | क्रीणाताम् | क्रीणताम् | ,, |
| लङ्— | अक्रीणीत | अक्रीणीयाताम् | अक्रीणत | ,, |
| वि० लि०— | क्रीणीत | क्रीणीयाताम् | क्रीणीरन् | ,, |

शुद्धं कुरु—त्वं कागंजं क्रीणाति क्रेष्यति वा। अहमक्रीणीम।

## 'षष्ठ्याः कारकत्वं नास्ति'[1]

षष्ठ्याः कारकत्वाभावे बीजं तु—सम्बन्धस्य क्रियाजनकत्वाभाव एव। यस्य हि क्रियया सह अन्वयो भवति, तदेव कारकमित्युच्यते। सम्बन्धस्य तु विशेष्यादिनैवाऽन्वयो भवति न तु क्रिययेति तस्य कारकत्वं नास्ति। यथा—'रामस्य पुस्तकमानय' इत्यत्र आनयनरूप-क्रियाजनकत्वं पुस्तकस्यैव न तु रामस्य। रामसम्बन्धिपुस्तकमानयेति परम्परया क्रियाजनकत्वेऽपि रामपदस्य साक्षात् क्रियाजनकत्वाभावेन तस्याः कारकत्वं नाङ्गीकृतं तज्ज्ञैः।

राज्ञः पुरुषः, रामस्य गृहम्, इत्यादौ स्वत्वं गृहपुरुषादौ, स्वामित्वं राज-रामादौ, इति तत्र षष्ठी सिद्धा। यद्यपि सम्बन्धः उभयनिष्ठः तथाऽपि भेदकादेव षष्ठी भवतीति स्थितिः। प्रकृते पुरुषसामान्यस्य भेदकं राज-पदं, गृहसामान्यस्य च रामपदमिति तत्र तत्रैव षष्ठीति फलितम्।

अनुशीलनी कारिका

**षष्ठी सर्वत्र सम्बन्धे कृद्योगे कर्तृ-कर्मणोः।**
**निर्धारणाऽनादरयोः स्मृतिहिंसादिकर्मसु॥**

अथवा

**कर्मादावपि षष्ठी स्यात् सम्बन्धस्य विवक्षया।**
**सर्वनाम्नस्तु हेतूक्तौ उक्ते हेतौ च केवले॥**
**कृतिः स्यात् कर्तृ-कर्मभ्यां लादेशादौ तु खण्डिता।**
**कृत्ये कर्तुर्विकल्पेन तुल्यार्थाच्च तथा मता॥**

---

१. सम्बन्धषष्ठी को कारक नहीं माना गया है, क्योंकि सम्बन्ध में क्रियाजनक-त्वरूप कारकत्व नहीं होता। जैसे 'माणवकस्य पितरं पन्थानं पृच्छति', इस वाक्य में पिता से ही प्रश्नादि क्रिया की उत्पत्ति हो जाने के कारण उनके प्रति माणवक अन्यथा सिद्ध हो जाता है।

उदाहरण-माला ( छन्दोबद्धा )

निर्मलं हि सतां चित्तं दीनानां बन्धुरीश्वरः।
शिष्याणां गुरवः पूज्या मित्रस्याभाषणं शृणु॥
वेधास्त्रिजगतां स्रष्टा प्रजानां पालको नृपः।
नराणां क्षत्त्रियः शूरः पित्रोस्तुल्यं न दैवतम्॥

सम्बन्धे--राज्ञः पुरुषः। रामस्य पुस्तकमिदम्।
सम्बन्धविवक्षायां--'मातरं स्मरति' इत्यस्य स्थाने 'मातुः स्मरति'।
हेतुशब्दप्रयोगे--'अन्नस्य हेतोः वसति'।
सर्वनाम्नः हेतुशब्दप्रयोगे--'केन हेतुना इत्यस्य स्थाने', 'कस्य हेतोः'।
कर्तृकर्मणोः--कृष्णस्य कृतिः, जगतः कर्ता कृष्णः।
लादेशादौ तु--खण्डिता (षष्ठी न भवति)।
कृत्यानां कर्तरि वा--मया मम वा सेव्यो हरिः।
तुल्यार्थैर्योगे वा--तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा।
निर्धारणे--वर्णानां ब्राह्मणः श्रेष्ठः।
अनादरे--छात्त्रो याति बहिर्गुरोः।
हिंसार्थकर्मणि--चौरस्य निहन्ति।

## ७. अधिकरणम्

आधारोऽधिकरणम्--कर्तृकर्मद्वारा तन्निष्ठ(कर्तृकर्मनिष्ठ) क्रियाया आधारः ( आश्रयः ) कारकमधिकरणसंज्ञः स्यात्[1]।

सप्तम्यधिकरणे--अनुक्तेऽधिकरणे सप्तमी भवति[2]।

आधारस्त्रिधा--( १ ) ऐकदेशिकम् ( औपश्लेषिकम् ), ( २ ) वैषयिकम् ( यत्र वस्तुनो विषयता अस्ति ), ( ३ ) अभिव्यापकं ( यत्र वस्तु व्यापितया तिष्ठति ) च। यथा--

१. कर्ता और कर्म के आश्रय ( आधार ) को अधिकरण कारक कहते हैं।
२. अनुक्त अधिकरण कारक में सप्तमी विभक्ति होती है।

१. कटे आस्ते। वने वसति। नद्यां स्नाति। ( एकदेशे इत्यर्थः )
२. मोक्षे इच्छाऽस्ति। विद्यायामनुरागः। ( तत्तद्विषये इत्यर्थः )
३. तिलेषु तैलम्। दुग्धे माधुर्यम् ( सर्वानवयवान् व्याप्येत्यर्थः )

अनुशीलनी कारिका

आधारे चैव निर्धारेऽवच्छेदे कालभावयोः।
निमित्ते कर्मसंयोगे विभक्तिः सप्तमी भवेत् ॥

अथवा

सप्तमी त्रिविधाधाराद् दूरान्तिकार्थतोऽपि च।
भावान्तरं यतो लक्ष्यं कर्मयोगे निमित्ततः ॥
नित्यैव सा मता सद्भिरथ निर्धारणं यतः।
भृशानादरभावे च षष्ठी स्यात् सप्तमी तथा ॥

उदाहरण-माला ( छन्दोबद्धा )

गुणेषु विनयः श्रेष्ठो गोषु कृष्णा पयस्विनी।
सभायां शोभते विद्वान् वर्षासु वर्धते नदी ॥
चौरे गते स जागर्ति शिष्यो याति गते गुरौ।
चर्मणि द्वीपिनं हन्ति सीम्नि पुष्कलको हतः ॥

त्रिविधाधारे--कटे आस्ते इत्यादि।
दूरान्तिकार्थेभ्यः--वनस्य दूरेऽन्तिके वा।
क्रियया क्रियान्तरलक्ष्ये--मयि आगते स गतः ( इयमेव सति सप्तमी )
निमित्तात् कर्मयोगे--चर्मणि द्वीपिनं हन्ति[1]।

---

१. 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥'

निर्धारणे—नृणां नृषु वा द्विजः श्रेष्ठः। छात्राणां छात्रेषु वा मैत्रः पटुः।

भृशानादरभावे—रुदति पुत्रे, रुदतः पुत्रस्य वा पिता जगाम।

अवच्छेदे—बाल्ये विद्याम् उपार्जयेत्।

अवच्छेदे—गृहीत इव केशेषु।

षट्कारकोदाहरणानि

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाऽभिहता निशाचरचमू रामाय तस्मै नमः।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे हे राम मामुद्धर॥

# कारक-विमर्श

यह पहले ( कारक० में ) कहा जा चुका है कि 'क्रियाजनकं कारकम् ।' अर्थात् क्रिया के जनक या सम्पादक को कारक कहते हैं । वस्तुतः— करोति, क्रियां निर्वर्तयति, इति कारकम्' । यही कारक पद को सर्वसिद्धान्त-व्युत्पत्ति है । इसलिए जो क्रिया या व्यापार का निर्वर्तक या किसी न किसी रूप में साधक नहीं है उसे कारक नहीं कहते ।

'छात्रः विद्यालये अध्यापकात् ज्ञानाय मनसा पुस्तकं पठति' । यहाँ पठनरूप व्यापार का सम्पादक किसी न किसी रूप में प्रत्येक है, क्योंकि छात्र कर्ता होकर, विद्यालय आधार होकर, अध्यापक अपादान रूप से, ज्ञान उद्देश्यत्वेन सम्प्रदान होकर, मन प्रकृष्ट उपकारक तथा करण रूप से और पुस्तक कर्मरूप से एक ही पठन क्रिया का निष्पादन करते हैं । जो क्रिया का सम्पादक नहीं है उसे कारक नहीं कहते । इसीलिए सम्बन्ध और सम्बोधन संस्कृत में कारक नहीं माने जाते हैं ।

'हे बालक ( त्वम् ) रामस्य वस्त्रं पश्य' यहाँ 'पश्य' (देखो) इस व्यापार का कर्ता 'त्वम्' है न कि बालक और राम केवल वस्त्र का सम्बन्ध बतलाता है न कि व्यापार का सम्पादन करता है अतः सम्बन्ध और सम्बोधन कारक नहीं हैं ।

## उपपदविभक्ति[1]

नमः स्वस्ति, विना, नाना, ऋते आदि कुछ अव्यय शब्दों के योग में भी विभक्तियाँ होती हैं । उन विभक्तियों को 'उपपदविभक्ति' कहते हैं । जहाँ उपपद-विभक्ति और कारक विभक्ति दोनों की प्राप्ति रहती है वहाँ कारक विभक्ति ही होती है । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' । जैसे--'मुनित्रयं नमस्कृत्य' यहाँ नमः के योग में चतुर्थी विभक्ति से बलवती, जो नमस्करण रूप क्रिया के योग में द्वितीया कारक विभक्ति है, वही होती है । तदुक्तम्—

---

१. पदमाश्रित्योत्पन्ना या विभक्तिः सा 'उपपदविभक्तिः' ।

२. क्रियामाश्रित्योत्पन्ना या विभक्तिः सा कारकविभक्तिः ।

'अपादान-सम्प्रदान करणाधार-कर्मणाम् ।
कर्तुश्चोभय-सम्प्राप्तौ परमेव प्रवर्तते' ॥

जैसे—'पश्य बालक: गच्छति' यहाँ पर 'पश्य' का कर्म होने के कारण बालक से कर्म-विभक्ति ( द्वितीया ) को प्राप्ति है और 'गच्छति' का कर्ता होने के कारण उससे कर्तृ-विभक्ति ( प्रथमा ) को भी प्राप्ति है; किन्तु यहाँ पर इस पूर्वोक्त क्रम में पर जो कर्तृ-विभक्ति प्रथमा है वही होती है।

## प्रथमा

'प्रातिपदिकार्थ- लिङ्ग-परिमाण-वचनमात्रे प्रथमा' ( सू० )

प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं च इति प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचनानि ( इतरेतर द्वन्द्व ) तानि एव इति प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचन-मात्रम् तस्मिन् प्रथमा स्यात् । द्वन्द्व समास के अन्त या आदि में श्रूयमाण जो पद रहता है उसका प्रत्येक के साथ सम्बन्ध होता है [1] । इसलिये यहाँ मात्र पद का प्रातिपदिकार्थ आदि प्रत्येक शब्द के साथ सम्बन्ध होगा । अत: इसका अर्थ हुआ प्रातिपदिकार्थ मात्र में, प्रातिपदिकार्थापेक्षया लिङ्गमात्र के आधिक्य में तथा परिमाण मात्र के आधिक्य में एवं वचनमात्र में प्रथमा विभक्ति होती है।

प्रातिपदिक का अर्थ है (१) सत्ता [2] अथवा (२) स्वार्थ और द्रव्य; या (३) स्वार्थ, द्रव्य और लिङ्ग; या (४) स्वार्थ, द्रव्य, लिङ्ग और संख्या; या (५) स्वार्थ, द्रव्य, लिङ्ग, संख्या और कारक । जिस प्रातिपदिक के उच्चारण करते ही स्वार्थ, द्रव्य, लिङ्ग, संख्या और कारक इन पाँचों में जिसका ज्ञान निश्चित रूप से हो उसे ही यहाँ प्रातिपदिकार्थ कहते हैं [3] इसलिए उच्चै:, नीच्चै: आदि अलिङ्गक एवं सत्तामात्रबोधक अव्यय शब्दों से तथा राम:, सीता एवं ज्ञानम् आदि नियतलिङ्गक शब्दों से प्रातिपदिकार्थमात्र में प्रथमा विभक्ति होती है।

जिन शब्दों का लिङ्ग निश्चित नहीं है उन शब्दों से लिङ्गमात्राधिक्य में

---

१. द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते ।

२. प्रातिपदिकार्थः सत्ता ।

३. स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकाणि इति पञ्चकं प्रातिपदिकार्थः । यस्मिन् प्रातिपदिके उच्चारिते स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकेषु मध्ये यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थः ।

प्रथमा होती है। जैसे—तटः, तटी, तटम् तथा कृष्णः, कृष्णा, कृष्णम् इत्यादि विशेषण शब्दों में लिङ्गमात्राधिक्य में प्रथमा विभक्ति होती है।

परिमाणमात्रे प्रथमा का उदाहरण है–द्रोणः, तण्डुलः, खारी, शाली, आढकम्, चूर्णम्, इत्यादि। यहां परिमाणमात्र में प्रथमा करने से द्रोणरूप परिमाण से परिच्छिन्न (तोला हुआ) तण्डुल ऐसा अभीष्ट अर्थ होता है। यदि प्रातिपदिकार्थ में प्रथमा होती तो द्रोणरूप तण्डुल ऐसा अर्थ होता जो कि अभीष्ट नहीं है।

वचनमात्रे प्रथमा का उदाहरण है—एकः, द्वौ, बहवः आदि। यहाँ पर एकत्व, द्वित्व तथा बहुत्व एक, द्वि और बहु शब्द से क्रमशः उक्त होने पर भी वचनमात्र में प्रथमा विधान करने के कारण प्रथमा विभक्ति होती है। अन्यथा 'उक्तार्थानामप्रयोगः' इस नियम से वहाँ एकत्व, द्वित्व एवं बहुत्व के द्योतक क्रम से सु और जस् विभक्ति नहीं आती।

'सम्बोधने च' (सू०)।

अभिमुखीकृत्य ज्ञापनं सम्बोधनम्[1]। सम्बोधने अधिके गम्येऽपि प्रथमा स्यात्। अर्थात् जो वस्तु पहले से सिद्ध है उसके अभिमुखीकरण को सम्बोधन कहते हैं, इसलिए सम्बोधन विभक्ति अनुवाद्य विषय में होती है न कि विधेय विषय में जैसे—'हे राम! मां पाहि'। किन्तु 'हे राजन्! सार्वभौमो भव' यहां राजा पहले से सिद्ध है इसलिए अनुवाद्य होने के कारण सम्बोधन में प्रथमा हुई, किन्तु 'सार्वभौम' विधेय है अतः उससे सम्बोधन में प्रथमा नहीं होती है।

## अभ्यासार्थं प्रश्नाः

(क) कारकलक्षणं विलिख्य कति कारकाणीति सोदाहरणं प्रदर्श्यताम्।

(ख) 'मातुः स्मरति' इत्यत्र षष्ठ्याः कारकत्वं कुतो नेति प्रदर्श्य 'रजकस्य वस्त्रं ददाति' इत्यत्र चतुर्थी भवेन्न वेति स्वमातृभाषया विविच्यताम्।

(ग) शुद्धं कुरु—पात्रं भुङ्क्ते। कविभिः कालिदासः श्रेष्ठः। मोक्षस्य इच्छाऽस्ति। अस्तं गतं सवितारं सायंसन्ध्यामुपासते।

इति कारकप्रकरणम्

---

१. 'सिद्धस्याऽभिमुखीकरणभावं सम्बोधनं विदुः।'

# समास-प्रकरणम्

## 'एकपदीभावः समासः[1]'

'पृथक्-पृथगर्थोपस्थापकत्वेन दृष्टानां पदानामेकार्थोपस्थितिजनकत्वमेकार्थीभावरूपं समसनमेव समासः[1]'

अनुशीलनीय कारिका

पदानां सङ्गतार्थानां मिलितानां परस्परम् ।
योऽयमेकपदीभावः समासः[2] स प्रकीर्तितः ॥

समासः पञ्चविधः[3]--( १ ) केवलसमासः, ( २ ) अव्ययीभावसमासः, ( ३ ) तत्पुरुषसमासः ( तत्पुरुषभेदः कर्मधारयः ), ( ४ ) बहुव्रीहिसमासः, ( ५ ) द्वन्द्वसमासश्चेति ।

---

१. दो या दो से अधिक पद जब आपस में मिल जाते हैं तो उस मेल को समास कहते हैं ।

२. बड़े वाक्य को छोटा करना ही समास का मुख्य उद्देश्य होता है । समास होने पर समस्त भाग प्रातिपदिक होता है, अर्थात् उनके बाद फिर विभक्तियाँ लगती हैं ।

३. समास भेद के प्रसंग में एक सूक्ति भी है ( 'समास-विमर्श' भी देखें )-

द्वन्द्वो द्विगुरपि चाहं गेहे मे नित्यमव्ययीभावः ।
तत् पुरुष-कर्म धारय येनाहं स्यां बहुव्रीहिः ॥

[ मैं द्वन्द्व ( जोड़ा ) हूँ और द्विगु ( दो गायोंवाला ) हूँ, मेरे घर में सदा अव्ययीभाव ( खर्च का अभाव ) रहता है, तत् पुरुष ( अतः हे पुरुष ! ) कर्म धारय ( कर्म का आश्रय लो ) जिससे मैं बहुव्रीहि ( बहुत धान्यों वाला ) हो जाऊँ । ]

# १. केवलसमासः

## 'विशेषसंज्ञाविनिर्मुक्तः केवलसमासः'[1]

अयं समासः 'सह सुपा' इति सूत्रेण विहितः।

सह सुपा—अत्र 'सह' इति योगविभागेन—'सुबन्तं समर्थेन समस्यते' इत्यर्थकरणात् क्वचित् (छन्दसि तिङन्तेनापि सुबन्तस्य समासो भवति। यथा—पर्यभूषयत्। अनुव्यचलत्। इत्यादि।

ततः 'सुपा' इत्यस्य—'सुबन्तं सुबन्तेन सह समस्यते' इत्यर्थेन 'भूतपूर्वः' इत्यादौ लोके समासो भवति।

इवेन सहाप्ययं समासो दृश्यते, किन्तु तत्र समासमध्यवर्तिविभक्तेर्लोपो न भवति[2]। यथा—जीवभूतस्येव। मातेव। इत्यादि।

# २. अव्ययीभावः

## अनव्ययम् अव्ययं भवतीति—'अव्ययीभावः'

## पूर्वपदार्थप्रधानोऽव्ययीभावः[3]

अव्ययीभावसमासे पदद्वयं भवति। तत्र प्रथमः अव्ययं भवति, द्वितीयश्च संज्ञाशब्दः। ततः समासे सति पदद्वयमपि अव्ययं भवतीति अन्वर्थेयं संज्ञा।

अयं नित्यसमासः ( अविग्रहोऽस्वपदविग्रहो वा नित्यसमासः। ), अर्था-

---

१. जिसकी कोई विशेष संज्ञा न हो, 'उसे केवल समास' कहते हैं।

२. दे० 'इवेन समासो विभक्त्यलोपश्च' वा०।

३. जिस समास में पूर्वपद का अर्थ प्रधान हो उसे अव्ययीभाव कहते हैं। ( अव्ययीभाव समास में पूर्वपद प्रायः अव्यय ही होते हैं। )

नोट—नामपूर्वपदक अव्ययीभाव भी होता है। यथा—सूपस्य लेशः-सूपप्रति, शाकस्य लेशः-शाकप्रति। इत्यादि।

दस्य विग्रहवाक्यं न भवति। सत्यपि विग्रहवाक्ये अन्येन पदेन समासे तु अन्यपदमेव तिष्ठति। यथा—

कृष्णस्य समीपम् = उपकृष्णम्। विघ्नानाम् अभावः = निर्विघ्नम्।

अव्ययीभावश्च—अव्ययीभावसमासे समस्तपदानाम् अव्ययत्वं नपुंसकत्वं च भवति[1]। अत एव अकारान्तं विहाय प्रायः सर्वत्र प्रयोगे विभक्ते श्रवणं न दृश्यते। यथा—अधिहरि। यथाशक्ति: इत्यादि।

नाव्ययीभावादतोऽम्त्वपञ्चम्याः—अदन्तादव्ययीभावात् सुपो न लुक्, तस्य पञ्चमीं विना अमादेशश्च भवति[2]। यथा—

राममधिकृत्य प्रवृत्ता कथा—अधिरामं कथा। कृष्णस्य समीपाद् गतः = उपकृष्णाद् गतः। इत्यादि।

अनुशीलनी कारिका

यस्याऽभवत् पूर्वपदेऽव्ययस्य नाम्ना विधानाद् द्विविधश्च लक्ष्म।
पूर्वः पदार्थोऽपि च तत्र मुख्यः तमव्ययीभावमुदाहरामः॥

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्धयर्थाभावात्ययाऽसम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु—एष्वर्थेषु वर्तमानस्य अव्ययस्य समर्थसुबन्तेन सह समासो भवति।

## उदाहरण-माला

विभक्त्यर्थे—हरौ इति अधिहरि।
समीपे—गङ्गायाः समीपम् उपगङ्गम्।
समृद्धौ—मद्राणां समृद्धिः सुमद्रम्।

---

१. अव्ययीभाव समास होनेपर समस्त भाग को अव्ययसंज्ञा होती है और वह नपुंसक लिंग हो जाता है।

२. पञ्चमी विभक्ति को छोड़कर अकारान्त अव्ययीभाव से परे विभक्ति के स्थान में 'म्' हो जाता है।

व्यृद्धयर्थे-यवनानां व्यृधिः दुर्यवनम् ( यवनों की समृद्धि-हीनता ) ।
अभावे विघ्नानाम् अभावः निर्विघ्नम् ।
अत्यये–बाधायाः अत्ययः ( ध्वंसः ) अतिबाधम् ।
असम्प्रति –क्रोधः सम्प्रति न युज्यते अतिक्रोधम् ( अभी क्रोध करना उचित नहीं ) ।
शब्दप्रादुर्भावे–हरेः प्रादुर्भावः इति हरि ( हरि शब्द का प्रादुर्भाव ) ।
पश्चात् गृहस्य पश्चाद् अनुगृहम् ।
यथार्थे ( योग्यतायाम् )–रूपस्य योग्यम् अनुरूपम् ।
( वीप्सायाम् )–गृहं गृहं प्रति प्रतिगृहम्, प्रतिदिनम् ।
( अनतिवृत्तौ )–शक्तिमनतिक्रम्य यथाशक्ति, यथाज्ञानम् ।
आनुपूर्व्ये–ज्येष्ठस्यानुपूर्व्येण अनुज्येष्ठम् ।
यौगपद्ये–चक्रेण युगपत्--सचक्रम् ।
सादृश्ये–हरेः सदृश सहरिः ।
सम्पत्तौ–क्षत्राणां सम्पत्तिः सक्षत्रम् ।
साकल्ये–तृणमपि अपरित्यज्य सतृणम् ( अत्ति )
अन्ते–अग्निग्रन्थपर्यन्तम् साग्नि ।

## ३. तत्पुरुषः

**तस्य पुरुषः—'तत्पुरुषः' अथवा सः पुरुषः—-'तत्पुरुषः'**

### तत्पुरुषभेदः कर्मधारयः

यत्र तत्पुरुषे पदद्वयं समानाधिकरणं ( समानलिङ्गं, समानवचनं समान-विभक्तिकम् ) भवति स 'कर्मधारयः' इति 'समानाधिकरणतत्पुरुषः' इति चोच्यते ।

अनुशीलनी कारिका

**कविभिः सप्तविधः स्यादित्येव कर्मधारयः कथितः ।**
**तत्पुरुषान्तर्भावात् तद्वत् प्राधान्यमीरितं चाऽस्य ।।**

विशेषणं[1] पूर्वपदे विशेष्यं तथोभयत्राऽपि विशेषणं च।
यस्योपमानं परतस्तदादौ सम्भावना चाप्यवधारणा च॥

सप्तविध: कर्मधारय:—

( १ ) विशेषणपूर्वपद:
( २ ) विशेष्यपूर्वपद:
( ३ ) विशेषणोभयपद:
( ४ ) उपमानपूर्वपद:
( ५ ) उपमानोत्तरपद:
( ६ ) सम्भावनापूर्वपद:
( ७ ) अवधारणपूर्वपदश्चेति

## उदाहरण-माला

( १ ) नीलमुत्पलम् – नीलोत्पलम्। पीताम्बर:।
( २ ) वैयाकरण: खसूचि:—वैयाकरणखसूची। मीमांसक: दुर्दुरूट:।
( ३ ) पूर्वं स्नात: पश्चाद् अनुलिप्त:—स्नातानुलिप्त:। पीतप्रतिबद्ध:।
( ४ ) घन इव श्याम:—घनश्याम:। कर्पूरगौर:।
( ५ ) पुरुष: व्याघ्र: इव—पुरुषव्याघ्र:। करकिसलयम्।
( ६ ) गुण इति बुद्धि:—गुणबुद्धि:। आलोकशब्द:।
( ७ ) विद्या एव धनं—विद्याधनम्। क्षमाशस्त्रम्।

---

१. यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य।
तल्लिङ्गं तद् वचनं सैव विभक्तिर्विशेषणस्यापि॥
भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम्।
प्रधानं तु विशेष्यं स्यादप्रधानं विशेषणम्॥
पदार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम्।
विशेष्यं तु प्रधानं स्यात् स्वार्थस्यैव समर्पणात्॥

उदाहरणानि—

पूर्णश्चन्द्र:, शुभ: काल, एको देव:, प्रिय: सखा।
महान् सिन्धुरिमे लोका:, सुप्त: सिंह:, सुधीर्जन:॥

छन्दोबद्धा

( १ ) नीलोत्पलानि नारीणां नयनानीव रेजिरे।
कल्पितान्यल्पवातेन सत्सरस्सु स्थितान्यहो ॥

( २ ) उद्वीक्ष्य यस्य मातङ्गान् घना इति मनीषया।
मयूरव्यंसका हृष्टा ननृतुस्तं नृपं भजे ॥

( ३ ) पुंसां स्नातानुलिप्तानामन्नं भोज्योष्णमेव हि।
पथ्यमित्यब्रवीद् वैद्यः शास्त्रैर्निश्चप्रचं वचः ॥

( ४ ) रामोऽयं पुरुषव्याघ्रः संवृत्तः कपिकुञ्जरैः।
हनिष्यति बलाद् युद्धे रावणं राक्षसर्षभम् ॥

( ५ ) कौमुदीविशदा भाति या वाणी रति-सुन्दरी।
लतातन्वी सदा दद्यात् सा द्राक्षामधुरां गिरम् ॥

( ६ ) तमालवृक्षैरभितः संवृतो विन्ध्यपर्वतः।
वानरैः सकलैर्दृष्टो दूराद् गजमनीषया ॥

( ७ ) मनीषासलिलैर्युक्तिरत्नैर्वाक्कल्पनोर्मिभिः।
यशस्सरिद्भिः सम्पन्नो भात्ययं कविसागरः ॥

---

असौ महाशयः सूरिरयं पूज्यतमो गुरुः।
अमी सुचरिता, शिष्याः, सर्वे कुशलिनो वयम् ॥

पूर्वा दिग्, विदुषी नारी, चारु स्रक्, सरला मतिः।
तिस्रः शाखाः, प्रिया वाचः, शून्या शाला, दश स्त्रियः ॥

इयं पयस्विनी धेनुरिमाः कुसुमिता लताः।
एषा सुललिता गीतिरसौ रम्या वनस्थली ॥

श्यामं तृणं, नवं पत्रं, तीव्रं दुःखं, महत् सुखम्।
पीनं वपुश्चलं चित्रं, कान्तं रूपं, हितं वचः ॥

इदं मनोहरं पुष्पमेते द्वे मधुरे फले।
तत् सुशीतलं वारि, रमणीयमिदं सरः ॥

## 'उत्तरपदार्थप्रधानः तत्पुरुषः'

यस्मिन् समासे उत्तरपदार्थः प्रधानं स तत्पुरुषसमास इत्युच्यते[1]। अत्र द्वितीयान्तमारभ्य सप्तम्यन्तं यावत् पूर्वपदैः सह सुबन्तं समस्यते।

### १. द्वितीयातत्पुरुषः

द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः—श्रित-अतीत-पतित-गत-अत्यस्त-प्राप्त-आपन्नैः सह द्वितीयान्तं पूर्वपदं समस्यते।

#### उदाहरण-माला

कष्टं श्रितः—कष्टश्रितः
कालमतीतः—कालातीतः
कूपं पतितः—कूपपतितः
ग्रामं गतः—ग्रामगतः
सङ्कटमत्यस्तः—सङ्कटात्यस्तः
सुखं प्राप्तः—सुखप्राप्तः
शरणमापन्नः—शरणापन्नः

### २. तृतीयातत्पुरुषः

तृतीया तत्कृतार्थेन गुणवचनेन—तृतीयान्तार्थकृतगुणवचनेन, अर्थशब्देन, हीन-छिन्न-भिन्न-रहित-शून्य-युक्त-रचित-कृत-दग्ध-हृत-विद्ध-दष्ट-आवृत—प्रणीत-आच्छन्न-सदृश-सम-पूर्व-कलह-मिश्रित-सहितादिभिश्च तृतीयान्तं पूर्वपदं समस्यते[2]।

#### उदारहण-माला

शङ्कुलया खण्डः—शङ्कुलाखण्डः
धान्येन अर्थः—धान्यार्थः
शरेण विद्धः—शरविद्धः
सर्पेण दष्टः—सर्पदष्टः

---

१. जिस समास में उत्तरपद का अर्थ प्रधान हो उसे तत्पुरुष समास कहते हैं। तत्पुरुष समास होने पर समस्त भाग उत्तरपद के लिङ्ग को प्राप्त होता है।

२ तृतीयान्त पद का सुबन्तपद के साथ जो समास होता है उसे तृतीया तत्पुरुषः समास कहते हैं।

धनेन हीनः—धनहीनः
शस्त्रेण छिन्नः—शस्त्रच्छिन्नः
नखैः भिन्नः—नखभिन्नः
बुद्ध्या रहितः—बुद्धिरहितः
ज्ञानेन शून्यः—ज्ञानशून्यः
चन्दनेन युक्तः—चन्दनयुक्तः
व्यासेन चरितं—व्यासरचितम्
कालिदासेन कृतं-कालिदासकृतम्
अग्निना दग्धः—अग्निदग्धः
चौरैः हृतम्—चौरहृतन्
वस्त्रेण आवृतः—वस्त्रावृतः
पाणिनिना प्रणीतं-पाणिनिप्रणीतम्
मेघेन आच्छन्नः—मेघाच्छन्नः
मात्रा सदृशी—मातृसदृशी
क्रोधेन समः— क्रोधसमः
मासेन पूर्वः— मासपूर्वः
वाचा कलहः—वाक्कलहः
जलेन मिश्रितं—जलमिश्रितम्
भार्यया सदृशः—भार्या सदृशः

## ३. चतुर्थीतत्पुरुषः

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः—चतुर्थ्यन्तार्थाय यत्तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं समस्यते[1] ।

### उदाहरण-माला

यूपाय दारु—यूपदारु
द्विजाय इदम्—द्विजार्थम् (पयः)
काकाय बलिः—काकबलिः
राष्ट्राय हितम्—राष्ट्रहितम्
पित्रे सुखम्—पितृसुखम्
गवे रक्षितम्—गोरक्षितम्

## ४. पञ्चमीतत्पुरुषः

पञ्चमी भयेन—भयादिभिः पञ्चम्यन्तैः सह सुबन्तं समस्यते[2] ।

### उदाहरण-माला

चौराद् भयम्—चौरभयम्
ग्रामाद् आगतः—ग्रामागतः
रोगाद् मुक्तः—रोगमुक्तः
राज्याद् भ्रष्टः—राज्यभ्रष्टः

१. तादर्थ्य में तथा बलि, हित, सुख आदि सुबन्त पद के साथ चतुर्थ्यन्त पद का जो समास होता है, उसे चतुर्थीतत्पुरुष समास कहते हैं ।

२. भय आदि सुबन्तपद के साथ पञ्चम्यन्त पद का जो समास होता है, उसे पंचमीतत्पुरुष समास कहते हैं ।

सुखाद् अपेतः—सुखापेतः
वृक्षात् पतितः—वृक्षपतितः
धर्मात् च्युतः—धर्मच्युतः
गृहाद् निर्गतः—गृहनिर्गतः

७, षष्ठीतत्पुरुषः

षष्ठी—स्वस्वामिभावादिवाचकषष्ठ्यन्तेन सह सुबन्तं समस्यते[1]।

## उदाहरण-माला

राज्ञः पुरुषः—राजपुरुषः
गङ्गायाः जलम्—गङ्गाजलम्
ब्राह्मणस्य पुत्रः—ब्राह्मणपुत्रः
गवां शाला—गोशाला
सर्वेषाम् उदयः—सर्वोदयः
देशस्य रक्षा—देशरक्षा

८, सप्तमीतत्पुरुषः

सप्तमी शौण्डैः—शौण्ड-धूर्त-कितव-प्रवीण-संवीत-पटु-पण्डित-कुशल-निपुण-सिद्ध-शुष्क-पक्वादिभिः सुबन्तैः सह सप्तम्यन्तं समस्यते[2]।

## उदाहरण-माला

दाने शौण्डः ( कुशलः ) दानशौण्डः
क्रियायां धूर्तः—क्रियाधूर्तः
द्यूते कितवः ( धूर्तः ) द्यूतकितवः
धर्मे प्रवीणः—धर्मप्रवीणः
रणे संवीतः ( आवृतः )—रणसंवीतः
व्यवहारे पटुः—व्यवहारपटुः
शास्त्रे पण्डितः—शास्त्रपण्डितः
कार्ये कुशलः—कार्यकुशलः
धर्मे निपुणः—धर्मनिपुणः
योगे सिद्धः—योगसिद्धः
आतपे शुष्कः—आतपशुष्कः
स्थाल्यां पक्वः—स्थालीपक्वः

तत्पुरुषभेदाः

तत्पुरुषोऽष्टविधोऽभूत् प्रथमादिविभक्तिनञ्कृतैर्भेदैः।
उत्तरपदजनितार्थो मुख्यस्तत्रेति पण्डितैः ख्यातः॥

---

१. समर्थ सुबन्त के साथ षष्ठ्यन्त पद का जो समास होता है, उसे षष्ठी-तत्पुरुष समास कहते हैं।

२. शौण्डादिप्रकृतिक सुबन्त के साथ सप्तम्यन्त पद का जो समास होता है, उसे सप्तमीतत्पुरुष समास कहते हैं।

उदाहरण-माला ( छन्दोबद्धा ।

( १ ) अमृतं योऽपिबद् दैत्यः तं वैकुण्ठो द्विधाऽच्छिनत् ।
राहुरुत्तरकायोऽस्य पूर्वकायोऽभवद् ध्वजः ॥
( उत्तरः कायस्य-उत्तरकायः । पूर्वं कायस्य-पूर्वकायः )

( २ ) दुःखातीतो भवत्येव यदि कृष्णश्रितो जनः ।
अपिचाऽन्नबुभुक्षुः सन् मुहूर्तंसुखमश्नुते ॥

( ३ ) मासावरः त्वं खलु मासपूर्वः त्वहं तु विद्यानिपुणो नितान्तम् ।
इतीव संसद्यपि वाडवानां परस्परं वाक्कलहो बभूव ॥

( ४ ) गृही भूतबलिं दत्ते गोसुखं तु कृषीवलः ।
दत्ते यष्टा यूपदारु कुण्डलाष्टापदं बुधः ॥

( ५ ) पूर्वं चोरभयं प्राप्य व्याघ्रभीतस्ततः परम् ।
सुखापेतो जनः सम्यगरण्ये निवसेत् कथम् ॥

( ६ ) वृक्षमूलमुपाश्रित्य जपतो देव पूजकात् ।
अधिकं राजपुरुषः सेव्यः सर्वमहान् यतः ॥

( ७ ) प्राश्यान्नमीश्वरार्धानं स्थालीपक्वं तु मानवः ।
वर्त्मन्यातपशुष्कः सन् दानशौण्डः कथं भवेत् ।

( ८ ) नञ्-तत्पुरुषः ।

नञ्तत्पुरुषस्य षड् भेदाः—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥
उभौ नञौ समाख्यातौ पर्युदास-प्रसज्यकौ ।
पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥
प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥
अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥

## उदाहरण-माला

( १ ) अब्राह्मणः=ब्राह्मणसदृशः। ( ४ ) अनुदरा कन्या=अल्पोदरा।
( २ ) अग्रहणम्=ग्रहणाऽभावः। ( ५ ) अधनम्=अप्रशस्तधनम्।
( ३ ) अनश्वः=अश्वेतरः। ( ६ ) असुरः=सुरविरोधः।

सम्पूर्ण तत्पुरुषसमासोदाहरणानि

**ददस्व विपदापन्नं त्रायस्व शरणागतम्।**
**दयाहीनं पशुं विद्धि दीनदेयं धनं हि नः॥**
**पापभीतो भवेन्नित्यं पित्राज्ञां परिपालयेत्।**
**शास्त्रदक्षं गुरुं पृच्छेन्न ब्रूयादप्रियं वचः॥**

## तत्पुरुष-विमर्श

( १ ) तत्पुरुष समास के अन्तर्गत--उपपद समास, गति समास, प्रादि समास, मध्यमपदलोपी समास, उपमित समास, उपमान समास और नञ् समास भी आ जाते हैं। जैसे--कुम्भं करोतीति -कुम्भकारः। वि+आ जिघ्रतीति व्याघ्री। मालामतिक्रान्तः--अतिमालः। निष्क्रान्तः कौशाम्ब्याः-निष्कौशाम्बिः। शाकप्रियः पार्थिवः--शाकपार्थिवः। पुरुषः व्याघ्र इव--पुरुषव्याघ्रः। घन इव श्यामः-- घनश्यामः। न अश्वः--अनश्वः।

( २ ) तत्पुषविशेषः कर्मधारयः--विशेषण-विशेष्यभाव से एकार्थप्रतिपादक समास को 'कर्मधारय समास' कहते हैं। कर्मधारय समास में विग्रहवाक्य के दोनों पदों में प्रथमा विभक्ति रहती है। जैसे---नीलम् उत्पलम्-नीलोत्पलम्। महती नवमी- महानवमी।

( ३ ) कर्मधारयविशेषो द्विगुः ( 'संख्यापूर्वो द्विगुः' )---कर्मधारयविशेष को 'द्विगु समास' कहते हैं, द्विगु समास में संख्यावाचक शब्द पूर्वपद में होता है। जैसे—त्रयाणां लोकानां समाहारः- त्रिलोकी। पञ्चगवधनः। सप्तर्षयः। इत्यादि।

अकारान्त उत्तरपदक 'द्विगु' स्त्रीलिंग हो जाता है। यथा—त्रयाणां सूत्राणां समाहारः—त्रिसूत्री। पञ्चानां मूलानां समाहारः—पञ्चमूली। दशमूली।

(४) परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः—द्वन्द्व और तत्पुरुष समास होने पर समस्त भाग उत्तर पद के लिंग को प्राप्त होता है। जैसे—कुक्कुटश्च मयूरी च—कुक्कुटमयूर्यौ। राज्ञः कुमारी—राजकुमारी। इत्यादि।

(५) रात्राह्नाहाः पुंसि—रात्रि, अह्न और अहन् शब्दान्त द्वन्द्व और तत्पुरुष पुंल्लिङ्ग होता है। यथा—अहोरात्रः। पूर्वाह्णः। द्व्यहः। इत्यादि।

## ४. बहुव्रीहिः

### अन्यपदार्थप्रधानो बहुव्रीहिः[1]

(अत्र तत्पुरुषसमासादयं विशेषो यत्तत्पुरुषे प्रथमपदं द्वितीयपदस्य येन केन प्रकारेण विशेषणमेव भवति, किन्तु बहुव्रीहौ समासगताः शब्दाः अन्यपदार्थविशेषणानि भवन्ति[2]।)

अनेकमन्यपदार्थे—अन्यपदार्थे वर्तमानम् अनेकं प्रथमान्तं समस्यते[3]। अर्थाद् द्वितीयादिसप्तम्यन्तविभक्त्यर्थो यत्र अन्यपदार्थे विद्यते तत्र अयं समासः।

एवं च समानाधिकरणानाम् अन्यपदार्थे बहुव्रीहिरित्यवसेयम्।

---

१. जहाँ समस्यमान किसी भी पद का अर्थ प्रधान न हो किन्तु कोई अन्य पदार्थ ही प्रधान हो, उसे बहुव्रीहि समास कहते हैं। जैसे—पीताम्बरः (विष्णु भगवान्)। आदि।

२. बहुव्रीहि और तत्पुरुष समास में अन्तर यह है कि तत्पुरुष में प्रथम पद द्वितीय पद का किसी न किसी रूप में विशेषण ही होता है, किन्तु बहुव्रीहि में सभी पद मिलकर किसी तीसरे पदार्थ के विशेषण होते हैं।

३. बहुव्रीहि समास में अन्य पदार्थ में वर्तमान अनेक प्रथमान्त परस्पर समस्त होकर एक हो जाते हैं।

अनुशीलनी कारिका

सप्तभिराख्याभिर्या विख्यातो यः स वै बहुव्रीहिः ।
अन्यपदार्थो मुख्यः कथितो विबुधैर्बहुव्रीहौ ॥

द्वाभ्यां पदाभ्यां बहुभिः पदैर्या संख्योभयोः सा पदयोः पदाग्रे ।
यस्याऽभवत् पूर्वपदे सहश्च दिगन्तरालव्यतिहारलक्ष्मा ॥

उदाहरण-माला ( छन्दोबद्धा )

( १ ) द्विपदानाम्--

[1]प्राप्ताग्निमेवमिपुमूढरथा[2] नथाश्वान् तूणीसमुद्धृतमरं च बहुस्रवेन ।
रुद्रोऽपि वीरपुरुषाः[3] स पुरो बिभेद देवैश्च दत्तपशुरेव महाबलः सन् ॥

( २ ) बहुपदानाम्--

नीलोत्पलवपुः[4] पातु श्रीमत्पीताम्बरो[5] हरिः ।
यस्य प्रसादात् कुब्जाऽभूद् दिव्यत्रिदशविग्रहा ॥

( ३ ) संख्योभयपदानाम्--

काननेऽस्मिन्नहो राजन् [6] द्वित्रैरायासितो जनैः ।
लभ्यन्ते पञ्चषा[7] नागा इत्यूचुर्बलिनः प्रभुम् ॥

( ४ ) संख्योत्तरपदानाम्--

ब्राह्मणाः कति वा रुद्रा वदन्तमिति संख्यया ।
कुशलस्त्वेकया युक्त्या वदेदुपदशा[8] इति ॥

---

१. प्राप्तः अग्निः यं सः, तम् । २. ऊढः रथः यैस्ते, तान् ।
३. वीराः पुरुषाः यासु, ताः । ४. नीलम् उत्पलमिव वपुः यस्य सः ।
५. श्रीमत् पीतम् अम्बरं यस्य सः । ६. द्वौ वा त्रयो वा=द्वित्राः ।
७. पञ्च वा षड् वा=पञ्चषाः । ८. दशानां समीपे ये सन्ति ते ।

(५) सहपूर्वपदानाम्—

सकलाः[1] सहसन्तानाः सकला अपि बाडवाः।
प्रोचुः स्वस्ति महीपाय सहपुत्राय[2] सन्ततम्॥

(६ दिगन्तराललक्षणानाम्—

विद्युदुत्तरपूर्वायाममोघा:[3] महिताऽथ वा।
यदि दक्षिणपूर्वायां वृष्टिर्नैव भवेत्तदा॥

(७) व्यतिहारलक्षणानाम्—

[4]बाहूबाहवि केशाञ्चित् मुष्टीमुष्टयद्भुतं तथा।
केशाकेश्यभवद् युद्धं वानराणां च रक्षसाम्॥

## बहुव्रीहि-विमर्श

(१) क्वचित् सप्तम्यन्तादि और प्रथमान्त पदों का भी बहुव्रीहि समास होता है। जैसे—नीलः कण्ठे यस्य सः नीलकण्ठः। चन्द्रभालः। इत्यादि।

(२ क्वचित् उपमागर्भित बहुव्रीहि समास भी पाये जाते हैं। यथा—चन्द्रस्य कान्तिरिव कान्तिर्यस्य सः चन्द्रकान्तिः। मनोजवः। इत्यादि।

(३) क्वचित् नञ्, उपसर्ग या संख्यावाचक पूर्वपद के साथ भी बहुव्रीहि समास होता है। यथा—अविद्यमानः पुत्रः यस्य स.—अपुत्रः। निर्दयः। उपदशाः। इत्यादि।

(४) क्वचित् तृतीयान्त पद के साथ 'सह' या 'सहित' का बहुव्रीहि समास होता है और सह या सहित के स्थान में 'स' हो जाता है। यथा—पुत्रेण सह= सपुत्रः। सीतया सहितः—ससीतः। इत्यादि।

(५) क्वचित् बहुव्रीहि समास में अन्य पदार्थ की प्रधानता नहीं भी रहती। यथा—द्वौ वा त्रयो वा—द्वित्राः (दो या तीन) पञ्चषाः (पाँच या छै) इत्यादि।

---

१. कलाभिः सह वर्तन्ते इति=सकलाः। २. पुत्रेण सह वर्तते इति= सहपुत्रः, तस्मै।

३. उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा उत्तरपूर्वा, तस्याम्।

४. बाहुभिश्च बाहुभिश्च गृहीत्वा इदं युद्धं प्रवृत्तं—बाहूबाहवि।

( ६ ) बहुव्रीहि समास में निष्ठान्त पद का पूर्व प्रयोग होता है[1] । यथा—उदकं पीतं येन सः—पीतोदकः । कृतकृत्यः इत्यादि ।

## ५. द्वन्द्वः

### चकारबहुलो द्वन्द्वः

द्वन्द्वसमासः उभयपदार्थप्रधानः सर्वपदार्थप्रधानो वा भवति[2] । यथा—'घटपटौ' इत्यत्र घटपटयोः मुख्यत्वेन प्रतीतिः । 'हरिहरगुरवः' इत्यादौ च त्रयाणां मुख्यत्वेन प्रतीतिः ।

अनुशीलनी कारिका

यस्मिन् समासे प्राधान्यमुभयोः स्यात् पदार्थयोः ।
स हि द्वन्द्वो द्विधा ज्ञेयो बुधैरिति विनिश्चितः ॥
इतरेतरयोगाख्यः समाहाराह्वयस्तथा ।
द्वाभ्यां पदाभ्यां बहुभिरुभौ चेति चतुर्विधः ॥

चार्थे द्वन्द्वः—चार्थे वर्तमानम् अनेकं सुबन्तं समस्यते[3] ।

चार्थस्तु चतुर्विधः—( १ ) समुच्चयः, ( २ ) अन्वाचयः, ( ३ ) इतरेतरयोगः ( ४ ) समाहारश्चेति । तत्र—

( १ ) समुच्चयः—परस्परनिरपेक्षस्य अनेकस्य एकस्मिन् अन्वयः । यथा—'ईश्वरं गुरुं च भजस्व' ।

---

१. दे० 'निष्ठा' सू० ।

२. जिस समास में सभी पद प्रधान हों और उनके बीच का योजक अव्यय ( च ) लुप्त रहे उसे द्वन्द्व समास कहते हैं ।

३. चार्थ ( इतरेतरयोग और समाहार अर्थ ) में वर्तमान अनेक समर्थ सुबन्त का समास होता है और वह समास द्वन्द्वसंज्ञक होता है ।

नोट—इतरेतर द्वन्द्व समास में समस्तभाग परपद के लिङ्ग को प्राप्त होता है । दे० 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः सू० ।

( २ ) अन्वाचयः---अन्यतरस्य आनुषङ्गिकत्वेन अन्वयः ( यथा---'भिक्षामट गाञ्चानय' । ( अत्रोभयत्र असामर्थ्याद् न समासः )

( ३ ) इतरेतरयोगः --मिलितानामन्वयः इतरेतरयोगः । अर्थात् परस्परसापेक्षसमुदितस्य एकक्रियायामन्वये सति इतरेतरयोगनामा द्वन्द्वसमासो भवति । यथा---धवश्च खदिरश्च = धवखदिरौ, छिन्धि । अत्र धवखदिरयोः सहैव छेदनक्रियायामन्वयेन परस्परसाहित्यात् सामर्थ्यं-प्रयुक्तः समासः । उभयोः प्राधान्यं च । एवं---रामकृष्णौ । शिवकेशवौ ।

( ४ ) समाहारः --समूहः समाहारः । अत्र समुदायस्य प्राधान्याद् एकत्वाच्च नपुंसकत्वम्, एकवचनत्वं चेति समाहारनियमः । यथा---संज्ञा च परिभाषा च तयोः समाहारः--संज्ञापरिभाषम् । एवं---पाणि-पादम् । रथिकाश्वारोहम् । इत्यादि ।

इतरेतरयोगे पदानां परस्परसम्बन्धमात्रं प्रतीयते, समाहारे तु समाहारस्यापि प्रतीतिरित्यनयोर्वैलक्षण्यम् ।

अनुशीलनी कारिका

**यत्र द्वित्वं बहुत्वं च स द्वन्द्व इतरेतरः ।**
**समाहारः स विज्ञेयो यत्रैकत्वं नपुंसकम् ॥**

विमर्शः---( १ ) द्वन्द्वसमासे अल्पाच्पदानां, पूज्यवाचकानां घिसंज्ञ-कानां पूर्वप्रयोगो भवति । यथा---शिवकेशवौ । तापसपर्वतौ । हरिहरौ ।

( २ ) ब्राह्मणादिवर्णानां तु क्रमेण पूर्वप्रयोगः । यथा---ब्राह्मण-क्षत्रिय विट्-शूद्राः ।

( ३ ) 'भ्रातुश्च ज्यायसः' यथा---युधिष्ठिरार्जुनौ । इत्यादि ।

( ४ ) समानाक्षर ऋतु नक्षत्राणां च क्रमेण पूर्वप्रयोगः । यथा---हेमन्त-शिशिर-वसन्ताः । कृत्तिकारोहिण्यौ । इत्यादि ।

( ५ ) अप्राणिवाचकानां प्राण्यङ्गानां च समाहार एव । यथा---कुशकाशम् । धानाशष्कुलि । पाणिपादम् । इत्यादि ।

( ६ ) ( क ) अचेतनानाम्, ( ख ) भिन्नलिङ्गानां नदीनाम्. ( ग ) देशवाचकानाम्, ( घ ) ग्रामवाचकानाम्, ( ङ ) क्षुद्रजन्तुवाचकशब्दानाम्, ( च ) येषां च विरोधः शाश्वतिकः तेषां च समाहार एव ।

यथा—( क ) गोधूमचणकम् । ( ख ) गङ्गाशोणम् ।
( ग ) अङ्गवङ्गम् । ( घ ) मथुरापाटलिपुत्रम् ।
( ङ ) यूकालिक्षम् । ( च ) अहिनकुलम् ।

(७) चवर्गान्त-दकारान्त-षकारान्त-हकारान्त-समाहारद्वन्द्वेभ्यः समासान्तष्टच्प्रत्ययोऽपि विहितः । तद्यथा—वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्त्रोपानहम् । (एषु सर्वत्र नपुंसकत्वमेकत्वं च)।

## उदाहरण-माला

( छन्दोबद्धा )

( १ ) द्विपदेतरेतरयोगद्वन्द्वानाम्—

ययोर्बलेन समितौ निहतौ कंसरावणौ ।
[1]सूर्याचन्द्रमसोर्वंश्यौ रामकृष्णावहं भजे ॥

( २ ) बहुपदेतरेतरयोग-द्वन्द्वानाम्—

वापीकूपतडागानां महतां स्थापनादपि ।
धर्मार्थ-काम-मोक्षाश्च[2] सिद्ध्यन्त्यत्र न संशयः ॥

( ३ ) द्विपदसमाहार-द्वन्द्वानाम्—

शीतोष्णं सुखदुःखं वा सहमानो हि वर्तते ।
नियम्य वाक्त्वचं सम्यक् स हि योगीति कथ्यते ॥

( ४ ) बहुपदसमाहारद्वन्द्वानाम्—

ढक्का-मृदङ्ग-पटहं यस्य दध्वान मन्दिरे ।
अश्व-हस्ति-रथं चाऽस्तु भावुकं तस्य भूभृतः ॥

---

१. सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ ( पुष्पवन्तौ ) ।
२. धर्मश्च अर्थश्च कामश्च मोक्षश्च—धर्मार्थकाममोक्षाः ।

# समास-विमर्श

**नित्य और अनित्य समास**—नित्य और अनित्य की दृष्टि से समास दो तरह का है। 'अविग्रहो नित्य-समासः, अस्वपदविग्रहो वा'। अर्थात् जिस समास में लौकिक विग्रह न हो या जिस समास के लौकिक विग्रह वाक्य में समास के पदों में से कोई एक स्वरूपतः न कहा जाकर अर्थतः कहा जाय वे दोनों नित्य समास हैं। जैसे—कृष्णसर्पः (गेहुमन साँप)। यहाँ 'कृष्णः सर्पः=कृष्णसर्पः' ऐसा लौकिक विग्रह नहीं होता। विग्रह करने से 'काला साँप' अर्थ हो जायगा न कि गेहुमन, जो अभीष्ट है। 'मनुष्याः एव=मनुष्यमात्रम्'। यहाँ विग्रह में मात्र शब्द नहीं कहा गया है—तदर्थक एव शब्द कहा गया है। इसलिए यह भी नित्यसमास है। इसके अतिरिक्त जिसमें लौकिक विग्रह हो वह अनित्य समास है।

**विग्रह**—'वृत्त्यर्थावबोधकं वाक्यं विग्रहः'—वृत्ति के अर्थ को अभिव्यक्त करने वाले वाक्य को विग्रह कहते हैं। विग्रह वाक्य के द्वारा ही वृत्ति में आये हुए पदों को अलग-अलग करके अर्थ प्रकट किया जाता है। यह विग्रह लौकिक और अलौकिक भेद से दो तरह का होता है। 'लोके प्रयोगार्हः लौकिकः'। अर्थात् लोक में प्रयोग के योग्य जो विग्रह है वह लौकिक है। यथा—'राजपुरुषः' इस समास वृत्ति का अर्थावबोधक वाक्य है 'राज्ञः पुरुषः' और लोक में प्रयोग के अयोग्य, केवल शास्त्रीयप्रक्रिया-प्रदर्शक वाक्य को अलौकिक विग्रह वाक्य कहते हैं। जैसे :—राजन् अस् पुरुष स्'।

**वृत्तिः**—'परार्थाभिधानं वृत्तिः' विग्रहवाक्यावयवपदार्थेभ्यः परः=अन्यः योऽयं विशिष्टैकार्थः, तत्प्रतिपादिका वृत्तिः।

अर्थात् विग्रह वाक्य के अवयव जो पद, उन अर्थों से अतिरिक्त जो एक विशिष्ट समुदायार्थ, उसके प्रतिपादक को वृत्ति कहते हैं। जैसे—'पीतम् अम्बरं यस्य स पीताम्बरः। यहाँ विग्रह वाक्य के पीत और अम्बर पदों के अर्थों से अतिरिक्त 'पीत अम्बर वाला पुरुष' यह एक विशिष्ट अर्थ समासरूप वृत्ति से ही ज्ञात होता है। इसलिए कहा गया है—

'पाणिन्यादिभिराचार्यैः शब्दशास्त्र-प्रवक्तृभिः ।
भणिता वृत्तयो या हि विशिष्टैकार्थ-बोधिकाः ॥
समासा एकशेषाश्च तद्धिताश्च कृतस्तथा ।
सनाद्यन्ता धातवश्च ता एव पञ्चधा मताः ॥'

इस प्रकार विशिष्ट एक-अर्थ की बोधक पाँच तरह की वृत्तियाँ हैं, (१) समासवृत्ति, (२) एकशेषवृत्ति, (३) तद्धितवृत्ति, (४) कृद्वृत्ति, और (५) सनाद्यन्तधातुवृत्ति। इन सभी वृत्तियों में पदार्थों से अतिरिक्त एक समुदायार्थ प्रतीत होता है। जैसे—

(१) समासवृत्ति में—'राजपुरुषः' से 'राजसम्बन्धी'।

(२) एकशेषवृत्ति में—'पितरौ' से 'माता और पिता'।

(३) तद्धितवृत्ति में—'दाशरथिः' से 'दशरथ का अपत्य'।

(४) कृद्वृत्ति में—'कुम्भकारः' से 'कुम्भ का बनाने वाला'।

(५) सनाद्यन्तधातुवृत्ति में—'पुत्रीयति' से 'अपने लिए पुत्र की इच्छा करने वाला'। इत्यादि।

'समर्थः पदविधिः'—पदसम्बन्धी जो कार्य वह समर्थाश्रित होता है। अर्थात् ये पूर्वोक्त पदसम्बन्धी कार्य सामर्थ्य रहने पर ही होते हैं। सामर्थ्य दो तरह के होते हैं—व्यपेक्षारूप और एकार्थीभाव रूप।

'स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद् यः परस्परान्वयस्तद्-व्यपेक्षाभिधं सामर्थ्यम्।'

'विशिष्ट अपेक्षा व्यपेक्षा' तथा 'सम्बद्धार्थः समर्थः' इस व्युत्पत्ति के अनुसार अपने-अपने अर्थों में पर्यवसन्न पदों का आकांक्षा, योग्यता और सन्निधि के कारण जो परस्परान्वय; उसे व्यपेक्षारूप सामर्थ्य कहते हैं। जैसे—राज्ञः पुरुषः आदि लौकिक विग्रह वाक्य में।

प्रक्रिया-दशायां प्रत्येकमर्थवत्त्वेन पृथग्गृहीतानां पदानां समुदाय-शक्त्या विशिष्टैकार्थ-प्रतिपादकतारूपमेकार्थीभावलक्षणं सामर्थ्यम्'।

'सङ्गतार्थः समर्थः' 'संसृष्टार्थः समर्थः'। इन व्युत्पत्तियों से एकीभूतरूप अर्थ होता है। अर्थात् सार्थक पृथक्-पृथक् पदों का समुदाय शक्ति

से जो एकीभूत विशिष्ट अर्थ; उसके प्रतिपादक सामर्थ्य को एकार्थीभावरूप सामर्थ्य कहते हैं। इसी सामर्थ्य के रहने पर समास आदि पाँचों वृत्तियाँ होती हैं। यह सामर्थ्य 'राजपुरुषः' आदि वृत्तियों में हो रहता है। अलौकिक विग्रह वाक्य में उसकी कल्पना ही को जाती है। जहाँ यह सामर्थ्य नहीं है वहाँ 'ऋद्धस्य राज्ञः पुरुषः' ( धनी राजा का पुरुष ) इस तात्पर्य से 'ऋद्धस्य राजपुरुषः' ऐसा प्रयोग नहीं होता; क्योंकि राजन् शब्द ऋद्ध के साथ सापेक्ष होने से असमर्थ हो जाता है। 'सापेक्षमसमर्थवत्।'

'सापेक्षत्वेऽपि गमकत्वात् समासः''देवदत्तस्य गुरोः कुलम्' इस अर्थ में 'देवदत्तस्य गुरुकुलम्' इत्यादि स्थलों में 'ऋद्धस्य राजपुरुषः' की तरह सापेक्ष होने से असमर्थ होने पर भी समास होता है। 'शिवस्य भगवतो भक्तः' इस अर्थ में 'शिवभागवतः' इस महाभाष्यकार के प्रयोग से कहीं पर आपेक्ष रहने पर भी समास होता है। अतः 'केषां शालीनाम् ओदनः' इस अर्थ में 'किमोदनः शालीनाम्' इत्यादि प्रयोग होता है। भर्तृहरि ने कहा है—

'सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।'

## अभ्यासार्थं प्रश्नाः

( क ) समासलक्षणं सोदाहरणं तद्भेदांश्च प्रदर्श्य 'अभिरामम्' इत्यत्र अव्ययत्वात् सुब्लुक् कुतो नेति सयुक्तिकं विलिखन्तु।

( ख ) तत्पुरुष-बहुव्रीहि-द्वन्द्वसमानां लक्षणानि तद्भेदांश्च राष्ट्रभाषया सोदाहरणं प्रदर्श्य 'देवानां प्रियः' इत्यस्यार्थं च विलिख्य पञ्चानां नलानां समाहारः। षण्णां पदानां समाहारः। चतुर्णां युगानां समाहारः। इति विग्रहेषु समस्तपदस्वरूपाणि प्रदर्शयन्तु। 'यथाजातः इत्यस्य' कोऽर्थः ?

( ग ) शुद्धं कुरुत—यथाशक्त्या उपगङ्गे अधिहरिः निष्ठां कुरु। देवप्रियः ब्राह्मणः चतुर्दशसूत्राणि पठतु। मयूरीकुक्कुट्यौ (मयूरी च कुक्कुटश्च) अहोरात्रौ आलपतः। शत्रुघ्नभरतौ पाटलिपुत्रजनकपुरी पश्यतः।

इति समासप्रकरणम्।

# स्त्रीप्रत्यय-प्रकरणम्

( १ ) अजाद्यतष्टाप्—

स्त्रीत्वविशिष्टे अर्थे अजादिगणपठितेभ्यः, अकारान्तेभ्यश्च प्राति-पादिकेभ्यः 'टाप् प्रत्ययो भवति'[1]।

( १ ) अजादिगणपठितानामुदाहरणानि ( छन्दोबद्धानि )—

अजाऽश्वा मूषिका बाला, एडका चटका तथा।
वत्सा होडा विलाता च, साला च चतुरा तथा॥

( २ ) अकारान्तानामुदाहरणानि—

| | | |
|---|---|---|
| अचल-अचला | अबल-अबला | आत्मज-आत्मजा |
| उत्तम उत्तमा | कामदुघ-कामदुघा | कृपण-कृपणा |
| कृश-कृशा | खट्व-खट्वा | गत-गता |
| गम्भीर-गम्भीरा | चञ्चल चञ्चला | विगत-विगता[2] |

---

१. स्त्रीलिंग बनाने के लिए अजादिगणपठित शब्दों के बाद तथा अकारान्त शब्दों के बाद 'टाप्' प्रत्यय लगता है। टाप् का शेष 'आ' तथा वक्ष्यमाण 'ङीप्' 'ङीष्' और 'ङीन्' का शेष 'ई' रहता है। ( अजादिगण आकृतिगण है )।

नोट—'टाप्' होने पर प्रत्यय के ककार के पूर्ववर्ती अकार को इकार होता है। यथा—

कारक–कारिका। नाटक–नाटिका। नायक-नायिका। पाचक-पाचिका। पालक-पालिका। बालक–बालिका। बोधक–बोधिका। सर्वक–सर्विका। साधक–साधिका। इत्यादि। दे० 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' सू०।

अपवाद—अधित्यका, उपत्यका, अष्टका, इष्टका, कन्यका, चटका, तारका, इत्यादि के ककार के पूर्ववर्ती अकार को इकार नहीं होता।

२. अन्यच्च—चतुर–चतुरा। चपल-चपला। जलद–जलदा। तरल-तरला। तृतीय–तृतीया। त्याज्य–त्याज्या। त्वदीय–त्वदीया। दक्षिण–दक्षिणा। दीन–दीना। दुर्गम–दुर्गमा। देय–देया। द्वितीय। द्वितीया–धर्मज्ञ–धर्मज्ञा। निपुण–

विमर्शः—अज--अश्व- एडक--मूषिक--प्रभृतीनाम् अजादिगणपाठतानामपि अजन्तत्वादेव तेभ्यः टापः सिद्धत्वेपि पृथग्गणे पाठः वक्ष्यमाणस्य 'वयसि प्रथमे' इति ङीपः 'जातेरस्त्रीविषयादयोपधात्' इति ङीपः, 'पुंयोगादाख्यायाम्' ङीषश्च बाधनार्थो बोध्यः।

## ( २ ) ऋन्नेभ्यो ङीप्—

स्त्रीत्वविशिष्टे अर्थे ( १ ) ऋकारान्तेभ्यः ( २ ) नकारान्तेभ्यश्च प्रातिपदिकेभ्यः 'ङीप्' प्रत्ययो भवति[1]।

### उदाहरण-माला

( १ ) कर्तृ--कर्त्री दातृ--दात्री प्रसवितृ--प्रसवित्री
कवयितृ--कवयित्री धातृ -धात्री भवितृ--भवित्री
क्रोष्टृ--क्रोष्ट्री नप्तृ--नप्त्री भोक्तृ--भोक्त्री, इत्यादि।

---

निपुणा। पठनीय--पठनीया। पश्चिम--पश्चिमा। पूर्व--पूर्वा। पेय--पेया। प्रथम--प्रथमा। प्रबल--प्रबला। फलद--फलदा। भवदीय--भवदीया। मदीय—मदीया। मध्यम—मध्यमा। मनोरम—मनोरमा। मुर्ख मूर्खा। रम--रमा। रमणीय--रमणीया। लघुतर- लघुतरा। वरद—वरदा। शिष्य--शिष्या। सरल--सरला। सुगम—सुगमा। हसित—हसिता। इत्यादि।

१. ऋकारान्त तथा नान्त शब्दों से स्त्रीलिंग में 'ङीप्' होता है।

नोट—( क ) संख्यावाची नकरान्त—षष्चन्, सप्तन्, नवन्, दशन् तथा ऋकारान्त 'स्वसृ' आदि शब्दों के परे 'ङीप्' नहीं होता। दे० 'न षट्स्वस्रादिभ्यः पञ्चभ्यः' सू०। 'स्वसा तिसृश्चतसृश्च ननान्दा दुहिता तथा। याता मातेति सप्तैते स्वस्रादय उदाहृताः॥

( ख ) 'मन्' भागान्त शब्दों के उत्तर भी ङीप् नहीं होता। यथा—पामन्--पामा। महिमन्—महिमा। सीमन्—सीमा। सुदामन्--सुदामा। इत्यादि।

( ग ) 'ङीप्' होने पर अन् भागान्त शब्दों की उपधा का लोप हो जाता है। यथा—राजन्--राज्ञी। इत्यादि।

(२) गुणिन्–गुणिनी उपकारिन्–उपकारिणी तपस्विन्–तपस्विनी अनुरागिन्-अनुरागिणी अधिकारिन्–अधिकारिणी दण्डिन्–दण्डिनी इत्यादि[१]।

## (३) जातेरस्त्रीविषयादयोपधात्—

स्त्रीत्वविशिष्टे अर्थे जातिवाचकेभ्यः, नित्यस्त्रीलिङ्गभिन्नेभ्यः यकारोपधभिन्नेभ्यश्च प्रातिपदिकेभ्यः 'ङीप्' प्रत्ययो भवति[२]।

### उदाहरण-माला

| | | |
|---|---|---|
| काक-काकी | चक्रवाक–चक्रवाकी | |
| कुक्कुर–कुक्कुरी | जम्बूक–जम्बूकी | ब्राह्मण–ब्राह्मणी |
| गोप–गोपी | तट-तटी | भल्लूक–भल्लूकी |
| गर्दभ–गर्दभी | निशाचर-निशाचरी | महाशूद्र–महाशूद्री[३] |
| घोटक–घोटकी | पिशाच–पिशाची | (शूद्र का शूद्रा) |

१. यथा—पयस्विन्–पयस्विनी। प्रियवादिन्–प्रियवादिनी। मनस्विन्–मनस्विनी। मनोहारिन्–मनोहारिणी। मानिन्–मानिनी। मायाविन्–मायाविनी। मालिन्—मालिनी। मेधाविन्-मेधाविनी। भामिन्–भामिनी। भोगिन्-भोगिनी। विलासिन्–विलासिनी। हस्तिन्-हस्तिनी। विद्यार्थिन्–विद्यार्थिनी।

२ नित्य स्त्रीलिङ्ग और यकारोपध से भिन्न अकारान्त जातिवाचक शब्द के उत्तर ङीष् प्रत्यय होता है। ङीष् का 'ई' मात्र शेष बचता है। (जातित्व का परिष्कार विमर्श में देखें।)

नोट—हयी, गवयी, मुकयी, मनुष्य–मनुषी तथा मत्स्य-मत्सी में यकारोपधका प्रतिषेध नहीं होता। दे० 'योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः' वा०।

३. यथा—आभीर–आभीरी औपगव–औपगवी। कपाल-कपाली। कुरङ्ग–कुरङ्गी। चाण्डाल–चाण्डाली। मराल–मराली। महिष–महिषी। मृग-मृगी। बिडाल–बिडाली। व्याघ्र–व्याघ्री। शूकर–शूकरी। शृगाल–शृगाली। इत्यादि।

## (४) वयसि प्रथमे —

स्त्रीत्वविशिष्टेऽर्थे प्रथमवयोवाचकेभ्यः अदन्तप्रातिपदिकेभ्यः ङीप्'[1]।

अत्र प्राणिनां कालकृताऽवस्थाविशेषो वयः प्रोच्यते। तथा च अर्थप्रकरणादिकमनपेक्ष्य यः शब्दः श्रुतमात्रेण वयः प्रतिपादयति स वयोवाचीत्युच्यते।

तच्च वयः त्रिविधम्—[१] कौमारम्, [२] यौवनम्, [३] वार्द्धकं च। तत्र कौमारवाचकेभ्यः एव ङीप्' प्रत्ययो भवति।

### उदाहरण-माला

कुमार कुमारी[2]। किशोर-किशोरी। वधूट-वधूटी। चिरण्ट-चिरण्टी। इत्यादि।

विमर्शः १—'वयस्यचरम इति वाच्यम्' इत्युक्त्वा वार्तिककारास्तु यौवनवयोवाचकेभ्योऽपि ङीपमिच्छन्ति। अत एव यौवनवाचकाद् 'वधूट-चिरण्ट' शब्दात् ङीप् भवतीत्यवसेयम्।

२—'कन्या' शब्दस्य प्रथमवयोवाचकत्वेऽपि 'कन्यायाः कनीन च' इति निर्देशात् ङीप् न भवति।

३-'शिशु' शब्दस्य प्रथमवयोवाचकत्वेऽपि अदन्तत्वाऽभावात् ङीप्-टापो न भवतः।

४—'बाला' इत्यादौ तु अजादित्वात् टावेवेत्युक्तं प्राक्।

---

१. प्रथम वयस् के बोधक अकारान्त शब्दों के उत्तर स्त्रीलिंग में ङीप् प्रत्यय होता है। ( अत एव वृद्धा, स्थविरा आदि में ङीप् नहीं होता )।

२. कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि।
कैशोरमापञ्चदशाद् यौवनं तु ततः परम्॥

## (५) षिद्गौरादिभ्यश्च—

स्त्रीत्वविशिष्टे अर्थे षिदन्तेभ्यः गौरादिगणपठितेभ्यश्च प्रातिपदिकेभ्यः ङीप्प्रत्ययो भवति[1]।

### उदाहरण-माला

( १ ) षिदन्तानाम्—

| | | |
|---|---|---|
| आसुरायण–आसुरायणी | खनक–खनकी | नर्तक–नर्तकी |
| कात्यायन–कात्यायनी | गार्ग्यायण–गार्ग्यायणी | रजक–रजकी। इत्यादि। |

( २ ) गौरादीनाम्—

| | | |
|---|---|---|
| आढक आढकी | गवय–गवयी | तरुण–तरुणी |
| आमलक–आमलकी | गौतम–गौतमी | तलुन–तलुनी। इत्यादि[2] |
| कौशातक–कौशातकी | गौर–गौरी | |



१. षिदन्त तथा गौरादिगणपठित से स्त्रीलिंग में ङीप् प्रत्यय होता है।

नोट—क्वचित् षित्वप्रत्युक्त ङीप् नहीं भी होता। यथा—दंश् + ष्ट्रन् -दंष्ट्रा।

२. यथा—द्रोण–द्रोणी। नट-नटी। मङ्गल–मङ्गली। पिप्पल–पिप्पली। बृहत-बृहती। भृङ्ग–भृङ्गी। मङ्गल–मङ्गली। मत्स्य–मत्सी। मातामह–मातामही। मुकय -मुकयी। शृङ्ग–शृङ्गी। श्वन्–शुनी। हय–हयी : हरिण–हरिणी। हरीतक–हरीतकी। इति गौरादिः।

# स्त्रीप्रत्यय-विमर्श

जैसे विसर्ग ( : ) और 'अम्' से क्रमशः पुंस्त्व और नपुंसकत्व द्योतित होता है, वैसे ही कुछ स्त्रीत्व के भी द्योतक-प्रकाशक प्रत्यय हैं। इन्हीं प्रत्ययों के योग से स्त्रीप्रत्ययान्त शब्द बनते हैं। जैसे—

आ (टाप्, डाप्, चाप्), ई (ङीप्, ङीष्, ङीन्), ऊ (ऊङ्) और ति।

१. टाप्—'अजाद्यतष्टाप् ( दे० पृ० १३३ )

२. डाप्—'डाबुभाभ्यामन्यतरस्याम्' ( सू० )—जिसके अन्त में 'मन्' हो, उस मन्नन्त प्रातिपदिक से स्त्रीलिंग में 'डाप्' ( आ ) होता है। जैसे—सीमन् सीमा। दामन्–दामा। इत्यादि।

३. चाप्—'सूर्याद् देवतायां चाब् वाच्यः' ( वा० )—देवता अर्थ में सूर्य शब्द से स्त्रीलिंग में चाप् ( आ ) प्रत्यय होता है। जैसे—सूर्यस्य स्त्री देवता 'सूर्या'।

४. ङीप्—

( क ) 'ऋन्नेभ्यो ङीप्' (सू०)।

( ख ) 'उगितश्च' (सू०)—उगित् ( उ-ऋ-लृ-इत् ) अर्थात्—१. मतुप्, २. इयसुन्, ३. क्तवतु और ४. शतृप्रत्ययान्त प्रातिपदिक से स्त्रीलिंग में ङीप् ( ई ) प्रत्यय होता है।

### उदाहरण-माला ( छन्दोबद्धा )

पतन्ती भवनात् बाला गर्तं गच्छति पश्यत।
एषा धनवती भूयात् जाया बुद्धिमती तव॥
भार्या पतिमती पूज्या वापी पद्मवती च या।
वनं गतवती सीता शीतं पीतवती जलम्।

१—धनवत्–धनवती। बलवत्–बलवती। श्रीमत्–श्रीमती।
२—गरीयस्-गरीयसी। लघीयस्-लघीयसी। श्रेयस्-श्रेयसी।
३—कृतवत्-कृतवती। गतवत्-गतवती। श्रुतवत्-श्रुतवती।
४—ददत्-ददती। पठत्-पठन्ती। भवत्-भवती। इत्यादि।

( ग ) 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः' (सू०)–
१. टित् ( टकारेत्संज्ञक ), २. ढक्, ३. अण् ४. अञ्, ५. द्वयसच्,
६. दघ्नञ् ७. मात्रच्, ८. तयप्, ९. ठक्, १०. ठञ्, ११. कञ् तथा
१२ क्वरप् प्रत्ययान्त प्रातिपदिक से स्त्रीलिंग में ङीप् ( ई ) प्रत्यय होता है।
यथा—१—कुरुचरी। २—सौपर्णेयी। ३—ऐन्द्री। ४—औत्सी। ५—ऊरुद्वयसी। ६—ऊरुदघ्नी। ७—ऊरुमात्री। ८—पञ्चतयी। ९—आक्षिकी। १०—लावणिकी। ११—यादृशी। १२—इत्वरी, इत्यादि।

### उदाहरण-माला ( छन्दोबद्धा )

नदी कुरुचरी तत्र सौपर्णेयी च कन्यका।
ऐन्द्री दिक् चेयमौत्सी चेयमूरुद्वयसी नदी॥
ऊरुदघ्नी प्रभो गङ्गा चोरुमात्री च वापिका।
पञ्चतय्यः प्रभोः शाला आक्षिकी कन्यका तव॥
एषा लावणिकी नारी कीदृशी तव वाटिका।
यादृशी वाटिका स्वर्गे तादृशी मम विद्यते॥
अस्मादृशी न कन्याऽत्र बाला युष्मादृशी नहि।
भवादृशी न सा बाला गत्वरी इत्वरी च या॥

( घ ) 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' ( वा० )—
नञ् स्नञ् ईकक् एवं ख्युन् प्रत्ययान्त तथा तरुण और तुलन शब्दों से ङीप् ( ई ) प्रत्यय होता है। जैसे—स्त्रैणी, पौंस्नी, शाक्तिकी, आढ्यङ्करणी, तरुणी, तलुनी। इत्यादि।

( ङ ) 'यञश्च' ( सू० )—अपत्य के अधिकार में विहित जो 'यञ्' प्रत्यय तदन्त प्रातिपादिक से ङीप् होता है। ( ङीप् होने के बाद अकार और यकार का लोप हो जाता है[1] ) जैसे—

गर्गस्य अपत्यं स्त्री गार्गी। वत्सस्य अपत्यं स्त्री वात्सी। इत्यादि।

( च ) 'द्विगोः' ( सू० )—द्विगुसमास में अकारान्त शब्दों से ङीप् होता है। जैसे—

---

१. दे० 'यस्येति च,' 'हलस्तद्धितस्य' ( सू० )

त्रिलोकी, पञ्चमूली, सप्तशती, पञ्चाश्वी, आदि। किन्तु त्रिफला, त्र्यनीका आदि में अजादित्वात् टाप् ही होता है।

नोट—

( १ ) यदि बहुव्रीहि समास में संख्या[1] और अव्ययादि से परे ऊधस् शब्द हो तो ङीप् होता है और ऊधस् शब्दान्त बहुव्रीहि को स्त्रीलिङ्ग में अन्त्य सकार की जगह अनङ् आदेश हो जाता है। जैसे—

द्वे ऊधसी यस्याः सा द्व्यूध्नी, अतिशयितम् ऊधः यस्याः सा अत्यूध्नी। बहुव्रीहि से भिन्न में नहीं होता। जैसे—ऊधः अतिक्रान्ता अत्यूधाः।

( २ ) बहुव्रीहि समास में संख्यावाचक शब्द से परे यदि दामन् और हायन शब्द हो तो ङीप्[2] होता है। जैसे—द्वे दामनी यस्याः सा द्विदाम्नी, द्वौ हायनौ यस्याः सा द्विहायनी—बाला। इत्यादि।

( ३ ) 'पत्युर्नो यज्ञसंयोगे' ( सू० )—यज्ञ के साथ सम्बन्ध रूप अर्थ रहने पर पति शब्द को स्त्रीलिङ्ग में नकारान्तादेश ( नान्तलक्षण[3] ङीप् ) होता है। जैसे—वशिष्ठस्य पत्नी। यज्ञसयोग नहीं रहने पर ग्रामस्य इयं पतिः, सभाया इयं पतिः—होता है।

'विभाषा सपूर्वस्य'—यदि पति शब्द समास का अन्तिम अवयव रूप होकर स्त्रीत्व का वाचक हो तो नकारान्तादेश हो जाता है और तब नान्त मानकर[4] ङीप् होता है। जैसे—गृहस्य पतिः–गृहपत्नी–गृहपतिः। वृषलपत्नी–वृषलपतिः, सभापत्नी–सभापतिः।

समास में पति शब्द यदि समान, एक, वीर, पिण्ड, भ्रातृ, पुत्र आदि शब्दों के बाद आवे तो नित्य ही नकारान्तादेश होता है जैसे—समानः पतिः यस्याः सा सपत्नी एवं एकपत्नी, वीरपत्नी, भ्रातृपत्नी, पुत्रपत्नी आदि।

---

१. दे० संख्याव्ययादेर्ङीप्', 'ऊधसोऽनङ्' ( सू० )।
२. दे० 'दामहायनान्ताच्च' ( सू० )। ३. दे० ऋन्नेभ्यो ङीप् ( सू० )।
४. दे० 'नित्यं सपत्न्यादिषु' ( सू० )।

( ४ ) पूतक्रतु[1] ( इन्द्र ), वृषाकपि ( शिव-विष्णु ), अग्नि, कुसित तथा कुसिद ( सूदखोर या देवविशेष ) शब्द से पुंयोग अर्थ में ङीप् और ऐकारान्तादेश हो जाता है। यथा—पूतक्रतोः स्त्री पूतक्रतायी ( इन्द्राणी ), वृषाकपेः स्त्री वृषाकपायी ( गौरी-लक्ष्मी ), अग्नायी, कुसितायी ( सूदखोर की स्त्री ), कुसिदायी ( सूदखोरकी स्त्री ) ।

( ५ ) मनु शब्द को पुंयोग में औकार तथा ऐकार आदेश विकल्प से होता है[2] और साथ ही ङीप् भी होता है। जैसे—मनोः स्त्री मनावी, मनायी, मनुः।

५. ङीष्—( क ) 'षिद् गौरादिभ्यश्च' (सू० —१–षित् (षकारेत्संज्ञक) प्रातिपदिक से तथा २–गौरादिगणपठित शब्दों से ङीष् होता है। जैसे—

( १ ) षित्–नर्तकी; रजकी, रञ्जकी, लुण्टाकी–लुण्ठाकी ( लूटने वाली ), कुट्टाकी ( काटने वाली ), इत्यादि।

( २ ) गौरादि—गौरी, पिप्पली, मृगी, हरिणी, मातामही, पितामही, मत्सी,[3] मनुषी[4], सुन्दरी[5] ( स्त्री ), पाण्डुरी[6] ( स्त्री ) इत्यादि।

( ख ) 'पुंयोगादाख्यायाम्' ( सू० )–जो पुंवाचक शब्द ( १—दाम्पत्य रूप या २—जन्य-जनक भावरूप ) पुंयोग से स्त्रीलिङ्ग में वर्तमान हो उससे ङीष् होता है। जैसे—

( १ ) गोपस्य स्त्री—गोपी, सूर्यस्य स्त्री–सूरी[7] ( कुन्ती ), अगस्त्यस्य स्त्री—अगस्ती, गणकस्य स्त्री—गणकी इत्यादि।

( २ ) केकयस्य कन्या—केकयी, देवकस्य दुहिता—देवकी, पुत्रस्य दुहिता—पौत्री। जनकस्य दुहिता—जानकी, इत्यादि।

---

१. दे० 'पूतक्रतोरैच्'। 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' ( सू० )।
२. दे० 'मनो रौ वा' ( सू० )
३. दे० 'मत्सस्य ङ्याम्' ( वा० )—मत्स्य में यकार का लोप हो जाता है।
४. दे० 'हलस्तद्धितस्य' ( सू० ) मनुष्य में यकार का लोप हो जाता है।
५.–६. मनुष्य जाति से भिन्न में—'सुन्दरा' 'पाण्डुरा' भूमिः होता।
७. दे० 'सूर्यागस्त्ययोश्छे च ङ्यां च' ( वा० )।

नोट—यदि पुंवाचक शब्द के अन्त में 'पालक' शब्द हो तो ङीष् नहीं होता। जैसे—गोपालकस्य स्त्री गोपालिका[1], अश्वपालकस्य स्त्री—अश्वपालिका, इत्यादि।

( ग ) 'इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य-यव-यवन-मातुलाचार्याणामानुक्' ( सू० )—इन्द्र, वरुण, भव, शर्व, रुद्र, मृड, हिम, अरण्य, यव, यवन, मातुल और आचार्य शब्दों से पुंयोग में आनुक् तथा उसी के साथ ङीष् भी होता है। जैसे—

इन्द्रस्य स्त्री—इन्द्रायणी, वरुणस्य स्त्री—वरुणानी, एवं—भवानी, शर्वाणी, रुद्राणी, मृडानी, मातुलानी तथा आचार्यानी[2]।

६. ङीन्—(क)'शार्ङ्गरवाद्यञो ङीन्' (सू०)—जातिवाचक १--शार्ङ्गरव आदि शब्दों से तथा २-अञ् प्रत्ययान्त शब्दों से स्त्रीलिङ्ग में ङीन् प्रत्यय होता है। जैसे—

( १ ) शार्ङ्गरवी, ब्राह्मणी इत्यादि। ( २ ) वैदी, पार्थवी। इत्यादि।

( ख ) 'नृनरयोर्वृद्धिश्च' (सू०)—नृ और नर शब्दों से स्त्रीलिङ्ग में ङीन् तथा उसके साथ वृद्धि भी होती है। जैसे, नृ—नारी एवं नर—नारी।

७. ऊङ्—'ऊङुतः' ( सू० )—यकारोपध से भिन्न मनुष्य जातिवाचक उकारान्त प्रातिपदिक से स्त्रीलिङ्ग में ऊङ् ( ऊ ) होता है। जैसे—कुरूः।

नोट—( १ ) संज्ञा में बाहुशब्दान्त[3] प्रातिपदिक से तथा 'पङ्गु' शब्द से स्त्रीलिङ्ग में ऊङ् होता है। जैसे—भद्रबाहूः, पङ्गूः।

( २ ) श्वशुर शब्द से स्त्रीलिङ्ग में ऊङ् होता है और साथ ही मध्य उकार तथा अन्त्य अकार का लोप[4] हो जाता है। जैसे—श्वशुरस्य स्त्री श्वश्रूः।

( ३ ) पूर्व पद उपमानवाचक हो और ऊरु उत्तरपद में हो, तो ऐसे

१. दे० 'पालकान्तान्न' ( वा० )।

२. दे० 'आचार्यादणत्वं च' सू०। ( या तु स्वयम् अध्यापिका व्याख्यात्री वा—सा आचार्या। )

३. दे० 'बाह्वन्तात् संज्ञायाम्' ( सू० )

४. दे० 'श्वशुरस्योकाराकारलोपश्च' ( वा० )।

( ३ ) दृश् = पुनः पुनः अतिशयेन वा पश्यति— दरीदृश्यते ।

| ( लट् ) | | | ( लृट् ) | | |
|---|---|---|---|---|---|
| दरीदृश्यते | दरीदृश्येते | दरीदृश्यन्ते | दरीदृशिष्यते | दरीदृशिष्येते | दरीदृशिष्यन्ते |
| दरीदृश्यसे | दरीदृश्येथे | दरीदृश्यध्वे | दरीदृशिष्यसे | दरीदृशिष्येथे | दरीदृशिष्यध्वे |
| दरीदृश्ये | दरीदृश्यावहे | दरीदृश्यामहे | दरीदृशिष्ये | दरीदृशिष्यावहे | दरीदृशिष्यामहे |

| ( लोट् ) | | | ( लङ् ) | | |
|---|---|---|---|---|---|
| दरीदृश्यतां | दरीदृश्येतां | दरीदृश्यन्ताम् | अदरीदृश्यत | अदरीदृश्येताम् | अदरीदृश्यन्त |
| दरीदृशिष्व | दरीदृशिष्येथां | दरीदृशिष्वं | अदरीदृश्येथाः | अदरीदृश्येथां | अदरीदृश्यध्वम् |
| दरीदृशिष्यै | दरीदृशिष्यावहै | दरीदृशिष्यामहै | अदरीदृश्ये | अदरीदृश्यावहि | अदरीदृश्यामहि |

( वि० लिङ् )

| | | |
|---|---|---|
| दरीदृश्येत | दरीदृश्येयाताम् | दरीदृश्येरन् |
| दरीदृश्येथाः | दरीदृश्येयाथाम् | दरीदृश्येध्वम् |
| दरीदृश्येय | दरीदृश्येवहि | दरीदृश्येमहि |

( ४ ) दा = पुनः पुनः अतिशयेन वा ददाति— देदीयते ।

| ( लट् ) | | | ( लृट् ) | | |
|---|---|---|---|---|---|
| देदीयते | देदीयेते | देदीयन्ते | देदीयिष्यते | देदीयिष्येते | देदीयिष्यन्ते |
| देदीयसे | देदीयेथे | देदीयध्वे | देदीयिष्यसे | देदीयिष्येथे | देदीयिष्यध्वे |
| देदोये | देदीयावहे | देदीयामहे | देदोयिष्ये | देदीयिष्यावहे | देदीयिष्यामहे |

| ( लोट् ) | | | ( लङ् ) | | |
|---|---|---|---|---|---|
| देदीयतां | देदीयेतां | देदीयन्ताम् | अदेदीयत | अदेदीयेताम् | अदेदीयन्त |
| देदीयस्व | देदीयेथां | देदीयध्वम् | अदेदीयथाः | अदेदायेथाम् | अदेदीयध्वम् |
| देदीयै | देदीयावहै | देदीयामहै | अदेदीये | अदेदीयावहि | अदेदीयामहि |

( वि० लिङ् )

| | | |
|---|---|---|
| देदीयेत | देदीयेयाताम् | देदीयेरन् |
| देदीयेथाः | देदीयेयाथाम् | देदीयेध्वम् |
| देदीयेय | देदीयेवहि | देदीयेमहि |

## ( ४ ) नामधातु

सुबन्त ( नाम[1] ) शब्दों के आगे कुछ प्रत्ययों के लगाने से जो धातु बनते हैं, उन्हें नामधातु कहते हैं। उन धातुओं के रूप भ्वादिगणीय धातुओं के समान होते हैं।

नाम धातु बनानेके ७ प्रत्यय हैं--१. क्यच्, २. काम्यच्, ३. क्यङ्, ४. क्विप्, ५. णिच्, ६. क्यप् और ७. णिङ्।

१-२ क्यच् काम्यच्--आत्म ( स्व ) सम्बन्धी इच्छा हो तो, उस इच्छा का जो कर्म, अर्थात् अपनी इच्छा का जो विषय ( सम्बन्धी ) हो, उस इच्छा-विषयक सुबन्त से क्यच् तथा काम्यच् प्रत्यय होता है। ( क्यच् में 'य' और काम्यच् में 'काम्य' शेष रहता है। ) यथा—आत्मनः पुत्रमिच्छति=पुत्रीयति, पुत्रकाम्यति वा। ( क्यच् और काम्यच् प्रत्ययान्त धातु परस्मैपदी होता है। )

नोट--अकारान्त शब्द से क्यच् होने पर क्यच् के परे रहते अन्तिम अकार को ईकार हो जाता है। ( दे० 'क्यचि च' सू० )।

३. क्यङ्—उपमानवाचक कर्तृपद के आगे आचार अर्थ में तथा अभूततद्-भाव अर्थ में भी क्यङ् ( य ) प्रत्यय होता है। यथा--( १ ) कृष्ण इव आचरति=कृष्णायते। ( २ ) अभृशो भृशो भवति=भृशायते। इत्यादि। ( क्यङन्त आत्मनेपदी होता है। )

अनुशीलनी कारिका

इच्छायामेषितुः स्वार्थे क्यच्-काम्यौ कर्मणः परे।
आचारे चोपमानात् क्यच् तथाऽधिकरणादपि॥
शब्दादेः करणे क्यङ् स्यात् सुखादिभ्यश्च वेदने।
बाष्पोष्मादेरुद्वमने रोमन्थाद् वर्तने तथा॥
उपमानाच्च कर्तुः क्यङ् आचारार्थे प्रजायते।
भृशादिभ्यश्च्व्यर्थ एव क्यङन्तादात्मनेपदम्॥

१. संज्ञा, सर्वनाम, विशेषण तथा अव्यय शब्दों को 'नाम' कहते हैं।

४. क्विप्--आचार अर्थ में क्यङ् के समान हो उपमानवाचक सभी प्रातिपदिकों से क्विप् प्रत्यय होता है। यथा--कृष्ण इव आचरति=कृष्णति। कविरिव आचरति=कवयति। इत्यादि। (क्विप् प्रत्ययान्त धातु परस्मैपदी होता है।)

५. णिच्--करने और कहने के अर्थों में कर्मबोधक प्रातिपदिक से तथा अतिक्रमण के अर्थ में करणबोधक प्रातिपदिक से णिच् प्रत्यय होता है। (यथा—(१) पटुं करोति=पटयति। (२) हितम् आचष्टे=हितयति। (३) अश्वेन नदीम् आक्रामति=अश्वयति, नदीम्। इत्यादि। (णिच् प्रत्ययान्त धातु परस्मैपदी होता है।)

६. क्यष्--लोहितादि तथा 'डाच्' प्रत्ययान्त तद्धित शब्दों से होने के अर्थ में क्यष् (य) प्रत्यय होता है। यथा--लोहितायति--लोहितायते। पटपटायति--पटपटायते। इत्यादि। (क्यष् प्रत्ययान्त धातु उभयपदी होता है।)

७. णिङ्--पुच्छ शब्द से उत्प्रेक्षादि अर्थ में, भाण्ड शब्द से इकट्ठा करने के अर्थ में और चीवर शब्द से अर्जन तथा परिधान अर्थों में णिङ् (इ) प्रत्यय होता है। यथा--उत्पुच्छयते। सम्भाण्डयते। भिक्षुः सञ्चीवरयते।

अनुशीलनी कारिका

सर्वशब्देभ्य आचारे प्रत्ययः क्विब् हि जायते।
कर्मवाचकशब्देभ्यः करोत्यर्थे ग्रहादिषु ॥
णिच्प्रत्ययो भवत्यत्र नामधातौ यथाक्रमम्।
डाच्प्रत्ययान्तशब्देभ्यो लोहितादिभ्य एव च ॥
क्यषप्रत्ययो भवत्यर्थे क्रियते शाब्दिकैरिह।
उत्क्षेपणेऽर्थे पुच्छाद्धि स्यात् समाचयने तथा ॥
भाण्डशब्दादर्जनेऽर्थे परिधाने च चीवरात्।
णिङ्प्रत्ययो भवेदेवमन्येऽप्यूह्याः स्वबुद्धिभिः ॥

क्यङन्त शब्दाय धातु के रूप ( शब्दं करोति शब्दायते=शब्द करता है )

| ( लट् ) | | | ( लोट् ) | | |
|---|---|---|---|---|---|
| शब्दायते | शब्दायेते | शब्दायन्ते | शब्दायताम् | शब्दायेताम् | शब्दायन्ताम् |
| शब्दायसे | शब्दायेथे | शब्दायध्वे | शब्दायस्व | शब्दायेथाम् | शब्दायध्वम् |
| शब्दाये | शब्दायावहे | शब्दायामहे | शब्दायै | शब्दायावहै | शब्दायामहै |

| लृट् ) | | | ( लङ् ) | | |
|---|---|---|---|---|---|
| शब्दायिष्यते | शब्दायिष्येते | शब्दायिष्यन्ते | अशब्दायत | अशब्दायेताम् | अशब्दायन्त |
| शब्दायिष्यसे | शब्दायिष्येथे | शब्दायिष्यध्वे | अशब्दायथाः | अशब्दायेथाम् | अशब्दायध्वम् |
| शब्दायिष्ये | शब्दायिष्यावहे | शब्दायिष्यामहे | अशब्दाये | अशब्दायावहि | अशब्दायामहि |

( शेष नामधातुओं के रूप लेखक की 'रूपचन्द्रिका में देखिये । )

# पदव्यवस्था

## आत्मनेपदप्रकरणम्

क्रिया का फल यदि कर्तृगामी हो अर्थात् कर्म करनेवाला ही यदि उस कर्म के फल को प्राप्त करे—तो 'स्वरितेत्'[१] 'ञित्' तथा णिजन्त धातुओं से आत्मनेपद होता है और क्रिया का फल यदि परगामी हो तो पूर्वोक्त धातुओं से परस्मैपद होता है। यथा—

'स पचते' ( वह अपने लिए पकाता है। ) तथा 'स पचति' ( वह दूसरों के लिए पकाता है। )

किन्तु कुछ धातुओं से नियमतः आत्मनेपद ही होता है। जैसे—'अनुदात्तेत्'[२] ( एध् आदि तथा ङित् ( शीङ् आदि ) एवं भाववाच्य[३] तथा कर्मवाच्य में नियमतः आत्मनेपद ही होता है। यथा—'हस्यते बालेन', पठ्यते छात्त्रेण ग्रन्थः' इत्यादि।

---

१. दे० 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' 'णिचश्च' (सू० )

२. दे० 'अनुदात्तङित आत्मनेपदम्' सू०। ३. दे० 'भावकर्मणोः' सू०।

कुछ उपसर्गों के साथ तथा कुछ अर्थों में कतिपय धातुओं से आत्मनेपद ही होता है यथा —

१. 'विपराभ्यां जेः'—वि अथवा परा उपसर्गपूर्वक 'जि' धातु से आत्मनेपद होता है। जैसे—विजयते, पराजयते। विजयतां देवः, शत्रुं पराजयस्व।

२. 'परिव्यवेभ्यः क्रियः'—परि, वि अथवा अव उपसर्गपूर्वक 'क्री' धातु से आत्मनेपद होता है। यथा—'पुस्तकं परिक्रीणीते, अवक्रीणीते वा' (पुस्तक खरीदता है)। 'अन्नं विक्रीणीते' ( अनाज बेचता है )।

३. नेर्विशः—'नि' पूर्वक 'विश' धातु से आत्मनेपद होता है। यथा—'निविशते सन्मार्गम्' ( अन्यत्र तु 'झटिति प्रविशति गेहम्' )।

४. आङि नुप्रच्छ्योः—आङ् अथवा नु उपसर्गपूर्वक 'प्रच्छ्' धातु से आत्मनेपद होता है। यथा—आनुते। आपृच्छते।

अनुशीलनी कारिका

**जयतेर्विपराभ्यां च क्रियो व्यपर्ययात्तथा।**
**नेर्विश आङि नुप्रच्छ्योः सदा स्यादात्मनेपदम् ॥**

५. समवप्रविभ्यः स्थः'—सम्, अव, प्र अथवा वि[1] पूर्वक 'स्था' धातु से आत्मनेपद होता है। यथा—सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते।

६. 'उदोऽनूर्ध्वकर्मणि -यदि उठने का अर्थ न रहे तो उत् पूर्वक स्था धातु से आत्मनेपद होता है। यथा—'ज्ञानाय उत्तिष्ठते' ( ज्ञान के लिए प्रयत्न करता है ) किन्तु उठने अर्थ में तो—'आसनात् उत्तिष्ठति' होता है।

७. 'उपाद्देवपूजा-सङ्गतिकरण-मित्रकरण पथिष्विति वाच्यम्'—उप उपसर्गपूर्वक 'स्था' धातुओं से अधोलिखित अर्थों में आत्मनेपद होता है—

( क ) देवोपासना के अर्थ में यथा—'सूर्यम् उपतिष्ठते'।

---

१. प्रतिज्ञा अर्थ में 'आङ्' उपसर्गपूर्वक 'स्था' धातु से भी आत्मनेपद होता है। दे० 'आङः प्रतिज्ञायामुपसंख्यानम्'—वैयाकरणाः शब्दं नित्यम् आतिष्ठन्ते।

( ख ) संगतिकरण ( संगम ) के अर्थ में यथा---'प्रयागे गङ्गा यमुनाम् उपतिष्ठते' ।

( ग ) मैत्रीकरण ( मित्र बनाने ) के अर्थ में यथा---'छात्रः छात्रम् उपतिष्ठते' ।

( घ ) 'मार्ग आगे की ओर बढ़ता है' इस अर्थ में यथा---'पन्थाः नगरम् उपतिष्ठते' ।

८. उपान्मन्त्रकरणे'---वैदिक मन्त्र के द्वारा स्तुति करने के अर्थ में उप-पूर्वक 'स्था' धातु से आत्मनेपद होता है। यथा---'आग्नेय्या आग्नीध्रम् उपतिष्ठते' ( अग्निदेवता की ऋचा से आग्नीध्र की स्तुति करता है । )

९. 'अकर्मकाच्च'---'उप' पूर्वक अकर्मक 'स्था' धातु से आत्मनेपद होता है। यथा—'भोजनकाले उपतिष्ठते'।

१०. 'वा लिप्सायामिति वक्तव्यम्'—लिप्सा अर्थ में 'उप' पूर्वक 'स्था' धातु से आत्मनेपद विकल्प से होता है।[1] यथा--'याचकः प्रभुम् उपतिष्ठति, उपतिष्ठते वा'।

अनुशीलनी कारिका

समवप्रविपूर्वाच्च स्थाधातोरात्मनेपदम् ।
उत्पूर्वादपि तज्ज्ञेयमुत्थानं चेन्न गम्यते ॥
सङ्गतौ देवपूजायां मैत्रीकरण एव च ।
मन्त्रेणैव स्तुतौ नित्यं तथैव पथि कर्तरि ॥

---

१. 'प्रकाशनस्थेयाख्ययोश्च'—प्रकाशन ( अभिप्राय की अभिव्यक्ति ) तथा स्थेय ( विवादास्पद विषय के निर्णायक ) अर्थों में उपसर्ग रहित 'स्था' धातु से भी आत्मनेपद होता है। यथा ( १ ) प्रकाशन में—'गोपी कृष्णाय तिष्ठते' ( गोपी कृष्ण के लिए अपना आशय प्रकट करती है )। ( २ ) स्थेयाख्य में—'संशय्य कर्णादिषु तिष्ठते यः' ( जो संशय में पड़कर कर्ण आदि को निर्णायक मानता है )।

**आत्मनेपदमेव स्यात् स्थाधातोरुपपूर्वतः ।**
**अकर्मकाच्च नित्यं तल्लिप्सायां तु विभाषया ॥**

११. 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः'—भासन ( युक्तिपूर्वक बोलने ), उपसम्भाषा ( उपसान्त्वना देने ), ज्ञान, यत्न, विमति ( विपरीत कहने ) तथा उपमन्त्रण ( प्रार्थना करने ), अर्थों में 'वद्' धातु से कर्तृगामी क्रियाफल में आत्मनेपद होता है। यथा—'पण्डितः शास्त्रे वदते।' 'प्रभुः भृत्यान् उपवदते'। 'क्षेत्रे वदते'। 'क्षेत्रे विवदन्ते कृषकाः'। 'याचकः दातारम् उपवदते'। इत्यादि।

१२. 'व्यक्तवाचां समुच्चारणे'—( व्यक्तवाचां = मनुष्यवाचाम् ) मनुष्यों के एक साथ बोलने के अर्थ में 'वद्' धातु से आत्मनेपद होता है। यथा—'सम्प्रवदन्ते छात्राः' ( मनुष्यभिन्ने तु—'सम्प्रवदन्ति काकाः' )।

१३. 'अनोरकर्मकात्'—मनुष्य यदि कर्ता हो तो 'अनु' पूर्वक अकर्मक 'वद्' धातु से आत्मनेपद होता है। यथा—'छात्रः गुरोः अनुवदते' ( छात्र गुरु जैसा बोलता है। 'मनुष्यभिन्ने तु—'भाषया संस्कृतम् अनुवदति'।

१४. 'विभाषा विप्रलापे'—बहुत लोगों के एकसाथ परस्पर विरोधी बातें कहने के अर्थ में 'वद्' धातु से आत्मनेपद विकल्प करके होता है। यथा—'रोगे विप्रवदन्ते विप्रवदन्ति वा वैद्याः' इत्यादि।[1]

अनुशीलनी कारिका

**वदौ दीप्तौ तथा यत्ने सान्त्वने चोपमन्त्रणे ।**
**विमतौ च तथा याने नित्यं स्यादात्मनेपदम् ॥**
**व्यक्तवाचां सहोक्तौ च तथैवानोरकर्मकात् ।**
**आत्मनेपदमेव स्याद् विप्रलापे विभाषया ॥**

१. 'अप' उपसर्गपूर्वक 'वद्' धातु से कर्तृगामी क्रियाफल में भी आत्मनेपद होता है। यथा—'चौरः न्यायम् अपवदते'। दे० 'अपाद् वदः' सू०।

१५ 'निसमुपविभ्यो ह्वः'—नि सम्, उप अथवा विपूर्वक 'ह्वेञ्' धातु से आत्मनेपद होता है। यथा—निह्वयते, संह्वयते, उपह्वयते। इत्यादि।

१६. 'स्पर्धायामाङः'—आङ् पूर्वक 'ह्वेञ्' धातु से स्पर्धा अर्थ में आत्मनेपद होता है। यथा—'मल्लः मल्लम् आह्वयते' (स्पर्धाभिन्ने तु—'पिता पुत्रम् आह्वयति')।

अनुशीलनी कारिका

**उप-सं-नि-वि-पूर्वस्य ह्वेधातोरात्मनेपदम्।**
**आङ्पूर्वस्यापि वक्तव्यं यदि स्पर्धावगम्यते॥**

१७. प्रोपाभ्यां समर्थाभ्याम्'—(प्रारम्भे अनयोस्तूल्यार्थता) तुल्यार्थक 'प्र' और 'उप' पूर्वक 'क्रम्' धातु से आत्मनेपद होता है। यथा—प्रक्रमते, उपक्रमते (प्रारम्भ करता है)।

१८. 'आङ उद्गमने (ज्योतिरुद्गमन इति वाच्यम्)—'आङ्' पूर्वक 'क्रम' धातु से ज्योति के उद्गमन अर्थ में आत्मनेपद होता है। यथा—'सूर्यः आक्रमते'—सूर्य उदित होता है। (ज्योतिर्भिन्ने तु—'आक्रामति धूमो हर्म्यतलात्')।

१९ 'वेः पादविहरणे'—पादप्रक्षेपण अर्थ में 'वि' पूर्वक 'क्रम' धातु से आत्मनेपद होता है।[1] 'साधु विक्रमते वाजी'।

अनुशीलनी कारिका

**प्रोपाभ्यामपि चारम्भे तथाङो ज्योतिरुद्गतौ।**
**विपूर्वात् पादविक्षेपे क्रमः स्यादात्मनेपदम्॥**

---

१. वृत्ति (स्वच्छन्द गति) सर्ग (उत्साह) तथा तयान (वृद्धि) अर्थों में उपसर्ग रहित भी 'क्रम' धातु से आत्मनेपद होता है। यथा—'शास्त्रे क्रमते बुद्धिः' (शास्त्र में बुद्धि अप्रतिहत है) 'अध्ययनाय क्रमते' (पढ़ने के लिए उत्साह करता है)। 'काचे प्रकाशः क्रमते' (शीशे में प्रकाश बढ़ता है)। दे० 'वृत्तिसर्गतायनेषु क्रमः' सू०।

२०. समस्तृतीयायुक्तात्' तृतीयान्त पद के साथ प्रयुक्त 'सम' पूर्वक 'चर्' धातु से आत्मनेपद होता है। यथा--'रथेन सञ्चरते'--रथ से जाता है।

२१. 'उदश्चरः सकर्मकात्--'उद्' पूर्वक सकर्मक 'चर्' धातु से आत्मनेपद होता है। यथा--'स धर्मम् उच्चरते'--वह धर्म का उल्लंघन करता है ( अकर्मके तु--'वाष्पम् उच्चरति' भाप ऊपर उठती है।

अनुशीलनी कारिका

**चरः सम्पूर्वकान्नित्यं तृतीयान्तेन योगतः।**
**आत्मनेपदमेव स्यादुत्पूर्वात्तु सकर्मकात् ॥**

२२. समो गम्यृच्छिभ्याम्'---'सम्' पूर्वक अकर्मक गम्' तथा 'ऋच्छ्' धातुओं से आत्मनेपद होता है। यथा--'वाक्यं सङ्गच्छते' समृच्छते'।

२३. 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्'--'सम्' पूर्वक अकर्मक ऋ, श्रु तथा दृश् धातु से आत्मनेपद होता है। यथा--'हितान्न यः सश्रृणुते स किं प्रभुः' ( यहाँ कर्म की अविवक्षा से 'श्रु' धातु अकर्मक है )। 'प्रभोः कृपया अन्धोऽपि संपश्यते'।

अनुशीलनी कारिका

**समो दृशः श्रृणोतेश्च विद ऋच्छस्तथैव च।**
**अकर्मकाद् भवेन्नित्यं सम्पूर्वादात्मनेपदम् ॥**

## परस्मैपदप्रकरणम्

'शेषात् कर्तरि परस्मैदम्'--( पूर्व कथित ) आत्मनेपद से रहित धातुओं से कर्ता में परस्मैपद होता है। यथा--अस्ति। भवति। आदि।

नोट--अधोलिखित स्थलों में केवल परस्मैपद ही होता है--

१. अनुपराभ्यां कृञः'--'अनु' तथा 'परा' पूर्वक 'कृ' धातु से परस्मैपद होता है। यथा--'पुत्रः पितुः अनुकरोति' 'स विघ्नान् पराकरोति'।

२. 'अभिप्रत्यतिभ्यः क्षिपः'--अभि प्रति तथा अति पूर्वक 'क्षिप्' धातु से परस्मैपद होता है। यथा--अभिक्षिपति, प्रतिक्षिपति। इत्यादि।

३. 'प्राद् वह' प्र पूर्वक 'वह्' धातु से परस्मैपद होता है। यथा--वायुः प्रवहति'।

४. 'परेर्मृषः--परि पूर्वक 'मृष्' धातु से परस्मैपद होता है। यथा--'स परिमृष्यति परिमर्षति वा'।

५. 'व्याङ्परिभ्यो रमः', 'उपाच्च', 'विभाषाऽकर्मकात्'—वि, आङ्, परि तथा उप पूर्वक 'रम' धातु' से परस्मैपद होता है। किन्तु 'उप' पूर्वक 'रम्' धातु यदि अकर्मक हो तो परस्मैपद विकल्प से होता है। यथा—कार्यात् विरमति। मध्यन्तरे आरमति। मित्रं दृष्ट्वा परिरमति। सभाध्यक्षः वक्तारम् उपरमति। अकर्मके तु--बालकः क्रीडनाद् उपरमन्ति, उपरमन्ते वा।

६. 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः'—बुध्, युध्, नश्, जन्, इङ्, प्रु, द्रु, तथा स्रु इन आठ ण्यन्त धातुओं से केवल परस्मैपद होता है। यथा-१. बोधयति कमलानि। २. योधयति काष्ठानि। ३. नाशयति दुःखानि। ४. जनयति सुखानि। ५. अध्यापयति वेदान्। ६. प्रावयति कष्टानि। ७. द्रावयति घृतानि। स्रावयति जलानि।

अनुशीलनो कारिका

अनुपूर्वपरापूर्वात् कृधातोरथ च क्षिपः।
अभिप्रत्यतिपूर्वाच्च प्रपूर्वाच्च वहेस्तथा॥
परिपूर्वान्मृषेश्चैव परस्मैपदमिष्यते।
व्याङ्पर्युपूर्वकाच्च रमधातोरथ क्रमात्॥
बुधयुधनशजनेङ्प्रुद्रु-ण्यन्तादपि च तद्भवेत्॥

## उपसर्गप्रकरणम्

[1]प्र-परा-अप-सम-अनु—आदि उपसर्ग नियमतः धातु से पूर्व प्रयुक्त होते हैं। इनमें से कुछ तो धातु के अर्थों को बदल देते हैं। जैसे—गच्छति--आ-

१. प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि सु उत् अभि प्रति परि उप्—ये २० प्रादि उपसर्ग हैं।

गच्छति । क्रीणाति --विक्रीणीते । आदि । कुछ धातु के अर्थों का अनुसरण करते हैं । जैसे -- गच्छति-अनुगच्छति । सरति-अनुसरति आदि । और कुछ उपसर्ग धातु के अर्थों को और परिवर्धित कर देते हैं । जैसे--भवति--सम्भवति वदति--प्रवदति । आदि ।

अनुशीलनी कारिका

( १ ) धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते ।
विशिनष्टि तमेवाऽर्थमुपसर्गगतिस्त्रिधा ॥
( २ ) उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराऽऽहार-संहार-विहार-परिहारवत् ॥

## सोपसर्गधात्वर्थाः

( १ ) अय गतौ—
अयते-- जाता है
उदयते --उगता है
दुरयते—दुखी होता है
दुलयते—काँपता है
निरयते—निकलता है
पलायते—भागता है
विलयते--विलीन होता है
व्ययते--खर्च करता है

( २ ) आस उपवेशने--
आस्ते--बैठता है
अध्यास्ते—रहता है
अन्वास्ते—पीछे बैठता है
उदास्ते—उदासीन होता है
उपास्ते--ध्यान करता है

( ३ ) इण् गतौ---
एति—जाता है
अत्येति—नष्ट होता है
अन्वेति -- पीछे मिलता है
अपैति—दूर होता है
अभिप्रैति-- इष्ट करता है
अभ्येति--सामने आता है
अवैति—जानता है
उदेति--उदित होता है
उपैति--पास जाता है
प्रत्येति—विश्वास करता है
विपर्येति—उलटता है
व्यत्येति---उटल-पलट करता है
व्येति--खर्च करता है
समन्वेति समन्वय करता है
समवैति—सम्बद्ध होता है

(४) कृञ् करणे---

करोति—करता है

अधिकुरुते-क्षमा वा पराभव करता है

अनुकरोति – नकल करता है

अपकरोति---हानि करता है

अलंकरोति--सजाता है

अपाकरोति--खण्डन करता है

आविष्करोति--प्रकट करता है

उत्कुरुते –चुगली करता है

उदाकुरुते--झपटता है

उपकरोति भलाई करता है

उपकुरुते---उपकार करता है

उपस्कुरुते--दूसरे का गुण लेता है

तिरस्करोति –अनादर करता है

निराकरोति —हटाता है

परिष्करोति--परिष्कृत करता है

प्रकुरुते---जबर्दस्ती करता है

प्रतिकरोति---बदला लेता है

प्रत्युपकरोति--प्रत्युपकार करता है

विकुरुते बिड़ता या विकार प्राप्त करताहै

संस्करोति-- संस्कार करता है

(५) क्रमु पादविक्षेपे—

क्रामति--चलता है

अतिक्रामति—उल्लंघन करता है

अपक्रामति---हटता है

उपक्रमते---आरम्भ करता है

निष्क्रामति---निकलता है

परिक्रामति---घूमता है

विक्रमते--पराक्रम करताहै

संक्रामति- संक्रान्त करता है

(६) क्षिप् प्रेरणे---

क्षिपति - फेकता है

अधःक्षिपति –नीचे फैलता है

अधिक्षिपति---तिरस्कार करता है

आक्षिपति—दोष लगाता है

उत्क्षिपति—ऊपर फेकता है

प्रक्षिपति—प्रक्षेप कहता है

विक्षिपति—विक्षिप्त होता है

संक्षिपति—छोटा करता है

(७) गम्लृ गतौ—

गच्छति—जाता है

अधिगच्छति--प्राप्त करता है

अनुगच्छति –पीछे जाता है

अपगच्छति---दूर हटता है

अभ्यागच्छति सामने आता है

अभ्युपगच्छति—स्वीकार करता है

अवगच्छति--जानता है

आगच्छति —आता है

उद्गच्छति—ऊपर जाता है

निर्गच्छति—निकलता है

प्रतिगच्छति--लौटता है

संगच्छते--संगत होता है

(८) चर गतिभक्षणयोः—

चरति---चलता या चरता है

अतिचरति—अधिक गमन करता है

अनुचरति—अनुसरण करता है
आचरति—आचरण करता है
उच्चरति—ऊपर जाता है
उच्चरते—उल्लङ्घन करता है
उपचरति—उपचार करता है
दुराचरति—बुरा आचरण करता है
परिचरति—सेवा करता है
विचरति विचरण करता है
व्यभिचरति—दुराचार करता है
संचरते—भ्रमण करता है

( ९ ) ज्ञा अवबोधने—

जानाति—जानता है
अनुजानाति— अनुमति देता है
अपजानाते - छिपाता है
अभिजानाति पहचानता है
अभ्यनुजानाति —स्वीकार करता है
प्रतिजानीते—प्रतिज्ञा करता है
विजानाति – निन्दा करता है
संजानीते—देखता है

( १० ) णीञ् प्रापणे—

नयति—ले जाता है
अनुनयति—मानता है
अपनयति—हटाता है
अभिनयति—अभिनय करता है
आनयति—लाता है
उन्नयते—ऊपर ले जाता है
उपनयति—पास में लाता है
निर्णयति—निर्णय करता है
परिणति विवाह करता है
प्रणयति—प्रेम करता है
विनयति—विनय करता है
विनयते—गिनता या खर्च करता है

( ११ ) दिश् अतिसर्जने—

दिशति—देता है
अपदिशति -बहाना करता है
आदिशति—आज्ञा देता है
उपदिशति—उपदेश करता है
निर्दिशति बतलाता है
प्रतिनिर्दिशति-विधेय को बतलाता है
व्यपदिशति—मुख्य व्यवहार करता है
संदिशति—संदेह कहता है

१२ ) पल्लृ पतने—

पतति गिरता है
उत्पतति उड़ता है
प्रणिपतति -प्रणाम करता है
निपतति—गिरता है

( १३ ) पद् गतौ—

पद्यते —जाता है
उत्पद्यते—पैदा करता है
उपपद्यते—युक्त होता है
निष्पद्यते—निष्पन्न होता है
प्रतिपद्यते—आज्ञा मांगता है
विपद्यते —मरता है
व्युत्पद्यते व्युत्पन्न होता है
संपद्यते—सुखी होता है

( १४ ) बन्ध् बन्धने—
बध्नाति—बांधता है
उद्बध्नाति—फांसी लगाता है
निर्बध्नाति—प्रेम करता है
प्रतिबध्नाति—रोक लगाता है
प्रबध्नाति—प्रबन्ध करता है
सम्बध्नाति—जोड़ता है
( १५ ) भू सत्तायाम्—
भवति—होता है
अनुभवति—अनुभव करता है
अन्तर्भवति—छिपाता है
अभिभवति—दबाता है
आविर्भवति—प्रकट होता है
उद्भवति—उत्पन्न होता है
पराभवति—पराभव करता है
परिभवति—तिरस्कार करता है
प्रभवति—समर्थ या पैदा करता है
प्रादुर्भवति—प्रकट होता है
सम्भवति—हो सकता है
( १६ ) मनु अवबोधने—
मन्यते—मानता है
अनुमन्यते—सलाह देता है
अभिमन्यते—घमण्ड करता है
अवमन्यते—तिरस्कार करता है
विमन्यते—उपेक्षा करता है
संमन्यते—सम्मान करता है
( १७ ) रुह् बीजजन्मनि—
रोहति—जमता है
अधिरोहति—बढ़ता है
अवरोहति—चढ़ता है
आरोहति—उत्पन्न होता है
प्ररोहति—मिलता है
संरोहति—पीछेसे मिलता है
( १८ ) लप् लपने—
लपति—बोलता है
अपलपति—छिपाता है
आलपति—बोलता है
प्रलपति—बकवास करता है
विलपति—विलाप करता है
संलपति—वार्तालाप करता है
( १९ ) वद् व्यक्तायां वाचि—
वदति—बोलता है
अनुवदति—अनुवाद करता है
अनुवदते—तुल्य बोलता है
अपवदति—दूषित करता है
अपवदते—छोड़ता है
उपवदते—प्रार्थना करता है
प्रतिवदति—जवाब देता है
विप्रवदन्ते—विरुद्ध बोलता है
विवदते—झगड़ता है
संप्रवदन्ते—मिलकर बोलते है
संवदति—बात करता है
( २० ) वृतु वर्तने
वर्तते—है
अनुवर्तते—पीछे पीछे चलता है
आवर्तते—दुहराता है
निवर्तते—लौटता है
परिवर्तते—घूमता है

प्रवर्तते--प्रवृत्त होता है
विवर्तते--बदलता है

(२१) षद्लृ विशरणगत्यवसादनेषु
सीदति—दुःखी होता है
अवसीदति—थकता है
उपसीदति—पास बैठता है
निषीदति—बैठता है
पर्यवसीदति—समाप्त होता है
प्रसीदति—प्रसन्न होता है
विषीदति—खिन्न होता है

(२२) ष्ठा गतिनिवृत्तौ—
तिष्ठति—ठहरता है
अनुतिष्ठति--करता है
अवतिष्ठते--स्थिर होता है
उत्तिष्ठति--उठता है
उपतिष्ठते—उपस्थान करता है
प्रतिष्ठते प्रस्थान करता है

(२३) हृञ् हरणे—
हरति—ले जाता है
अनुहरति—नकल करता है
अपहरति---चुराता है
अभ्यवहरति—खाता है
आहरति—लाता है
उद्धरति—निकालता है
उदाहरति—उदाहरण देता है
उपसंहरति—उपसंहार करता है
उपहरति—उपहार देता है
उपाहरति---लाता है
परिहति—छोड़ता है
प्रत्युदाहरति—दूसरा उदाहरण देता है
प्रहरति---मारता है
विहरति—विहार करता है
व्यवहरति—व्यवहार करता है
व्याहरति—बोलता है
संहरति—नाश करता है
समाहरति—इकट्ठा करता है

( अनुवादोपयोगी शब्दकोश लघुकौमुदी 'इन्दुमती' टीका के परिशिष्ट में देखिये )

## गुप्ताऽशुद्धिप्रदर्शनम्

( क ) १. हे रामाऽत्रागच्छ, स्त्रीकर्तृकं एतं कर्मं पश्य ।
२. अहवाश्चर्यं, सो हि महात्मा: देवानांप्रिथं दृष्टा भूयस्तस्मै नमन्ति ।
३. ततो सारथी शास्त्रोक्तां विधिमनुश्रीत्य मातायै किञ्चित् फलानि दत्त्वा महाराजानं प्रणमन्ति ।
४. ते तान्नवलोक्य विषयान्नाह ।
५. त्वं नरपत्यां सह तां सन्धि करोतु ।

६. सो एव सत् नराः ये सर्वासां अतिथिं पूजयन्ति ।
७. गुरवस्य तां निधिं अवलोक्य चकितास्ते पेचकाः ।
८ तस्यामेव अवधौ नभः मेघाच्छन्नो जातः ।
९. अस्य गिरौ तपस्वीणां बह्वयः समाधयः सन्ति ।

( ख ) १. एवं चिन्तयन् सो निशा अतिचक्राम ।
२. अकिञ्चनेन मा धनं याच्यतां भवान् ।
३. प्रीतिपात्रा भार्या प्रस्थिते तस्याः सार्धं वयभति काशीं प्रस्थितः ।
४. तं दिवसमारभ्य अहमपि अत्र तिष्ठेरन् ।
५. अहं पादयोर्खञ्जः भवान् नेत्रयोर्काणः ।
६. विजयतु महाराजा, स मम विंशतिं मुद्रां धारयन् शिलायामधिशेते ।
७. पर्वते हिमालयो उच्चतरस्तस्यां रम्यः मानसरोवरं दृश्यते ।

( ग ) १. हे भगवान्, केन कर्मेण नरः वाञ्छितं फलः प्राप्यते ।
२. स मृषां भाषते, अतः केऽपि तं न विश्वसति ।
३. तावुचुः—निशिषु द्वादशे वादने अहं काशीं गच्छामः ।
४. विद्यामुपार्जयित्वा नराः सर्वे स्थाने पूज्यतरो भवति ।
५. युधिष्ठिरोवाच—भ्रातराः, एहि, मातरं प्रणमामः ।

( घ ) अस्ति मगधदेशे पाटलिपुत्रं नाम नगरी । तस्मिन् अस्तमितायां भानौ प्रस्थितो वयम् । तत्र नगरं बहिरेव पुत्रवत्सला एका शिशोः अङ्कमारोपयित्वा पणमेकं दातुं वयं पार्थयामास । तस्य वचनमाकर्ण्य अस्माकं मित्रोवाच—सखे, एषा महतया क्षुधया पीडिता पश्यते, तव् दरिद्रामेनां किञ्चित् पणं देहि, नोचेदस्य प्राणः एव निःसरेयुः ।

## गुप्ताऽशुद्धिकारिका

[1] पतिना रक्षिता[2] सर्वा[3] दारा भवति[4] शोभना[5] ।
सर्वां[6] विधिं गृहानां[7] सा[8] करोति[9] मतिना[10] मुदा ॥ १ ॥

१. पत्या । २. रक्षिताः । ३. सर्वे । ४. भवन्ति । ५. शोभनाः । ६. सर्वम् । ७. गृहाणाम् । ८. ते । ९. कुर्वन्ति । १०. मत्या ।

ते[1] गृहः[2] कुत्र[3] मित्रास्ति द्रक्षिष्यामि[4] [5]सखेरहं[6] ।
विहित्वा[7] सर्वकार्याणि[8] विप्रं[9] दद्यां बहुं[10] धनम् ॥ २ ॥
प्रभुक्त्वा[11] त्वं गृहेणाद्य[12] आगतो[13] सखिना[14] सह ।
[15]भ्रातत्वंदोयमित्रोऽत्र[16] नागतः[17] केन हेतुना ॥ ३ ॥
तव[18] साकं [19]गमिष्येऽहं नोचेत् प्रेमस्य[20] बन्धने[21] ।
मरिष्ये[22] नात्र सन्देहस्त्यजिष्यामि[23]असुं[24] निजम्[25] ॥ ४ ॥
वर्त्मेनानेन[26] गच्छन्तः कर्मं[27] कुर्वन्ति ये नरः[28] ।
नमस्कृत्वा[29] प्रभुं यान्ति मरित्वा[30] ते न संशयः ॥ ५ ॥
गुरुणा[31] श्रुतिमधीते नाधीती शब्दानुशासनम्[32] ।
न्यायशास्त्रमधीयन्तो[33] नो बिभ्यन्ति[34] केनचित्[35] ॥ ६ ॥
ये नो ददन्ति[36] नो भुङ्क्ते[37] पुनर्रमन्ति[38] योषितैः[39] ।
[40]जहित्वा सर्वं ते [41]जान्ति [42]जगतेऽस्मिन् विनिन्दितः ॥ ७ ॥
सन्धिस्त्वया न कर्तव्या[43] महती[44] रिपुणा सह ।
प्राप्ते[45] विपत्तौ धीरत्वं नो जहन्ति[46] महज्जनाः[47] ॥ ८ ॥

---

१. तव । २. गृहम् । ३. मित्र ! अस्ति । ४. द्रक्ष्यामि । ५. सख्युः । ६. अहम् । ७. विधाय । ८. कार्याणि । ९. विप्राय । १०. बहु । ११. प्रभुज्य । १२. गृहात् । १३. आगतः । १४. सख्या । १५. भ्रातस्त्वदीयम् । १६. मित्रम् । १७. नागतम् । १८. त्वया । १९. गमिष्यामि । २०. प्रेम्णः । २१ बन्धनात् । २२. मरिष्यामि । २३. त्यक्ष्यामि । २४. असून् । २५. निजान् । २६. वर्त्मना । २७. कर्म । २८. नराः । २९. नमस्कृत्य । ३०. मृत्वा । ३१. गुरोः । ३२. शब्दानुशासने । ३३ अधीयानः । ३४. बिभ्यति । ३५. कस्माच्चित् । ३६. ददति । ३७. भुञ्जते । ३८. पुनारमन्ते । ३९ योषिद्भिः । ४०. हात्वा । ४१. यान्ति । ४२. जगति । ४३. कर्तव्यः । ४४. महान् । ४५. प्राप्तायाम् । ४६. जहति । ४७. महाजनाः ।

# निबन्ध-खण्डम्

## ( १ ) महर्षिः पाणिनिः

अस्य महापुरुषस्य नाम कस्यापि संस्कृतज्ञस्य नाऽविदितमस्ति। विद्वत्समाजे अस्याभिधानं सादरं स्मृतिपथं नीयते। महाभाष्यकारेण पतञ्जलिना पाणिनेः विषये दाक्षीपुत्र-शालातुरीयशब्दयोः प्रयोगौ विहितौ—'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः' इति। अनेन सिद्ध्यति यत् पाणिनेः मातुर्नाम 'दाक्षी' अस्ति। प्राचीनकाले पितुरपेक्षया मातृनामोल्लेखोऽधिकं भवति स्म। दाक्ष्याः गर्भाद् उत्पन्नोऽयं महर्षिः शालातुरनगरं समलञ्चकार। पुरातत्त्वविदो विद्वांसः अनेकप्रबल-प्रमाणैः पाणिनिजन्मस्थानं पेशावरस्य समीपस्थं 'लाहुर' ( लाहौर ) नामकं नगरं मन्यन्ते। भट्टसोमेश्वर-मतानुसारेण महर्षिः पाणिनिः पाटलिपुत्रनिवासिनः उपवर्षाचार्यस्य अन्तेवासित्वे विद्याध्ययनं चकार। अन्येनापि राजशेखरोद्धृत-वचनेन पाणिनेः विद्याध्ययनं पाटलिपुत्रे ( पटनानगरे ) अभूद् इति प्रतीयते। तदुक्तं काव्यमीमांसायाम्—

'श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा—'अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः। वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः॥' इति।

श्रूयते यद् बाल्यकाले पाणिनिः अतीव जडमतिरासीत्। अन्येषां वररुचि-प्रभृतीनां सहपाठिनां प्रगतिं विलोक्य स मानसिकव्यथया पीडितः सन् प्रयागराजं गत्वा अक्षयवटतले सशरीरतापम् अखण्डं तपश्चक्रे। भगवतः आशुतोषस्य प्रसादात् चतुर्दश माहेश्वरसूत्राणि लब्ध्वा, तदनु चतुःसहस्र-संख्यानि अष्टाध्यायीसूत्राणि विरचय्य परिश्रमेणाऽल्पेन समस्तविद्याज्ञानं लेभे। शास्त्रार्थे वररुचिप्रभृतयः तेन परास्ताः। व्याकरणनिर्माणानन्तरम्—'आदौ व्याकरणं काव्यमनु जाम्बवतीजयम्'—अनुसारेणाऽनेन 'जाम्बवतीजय'—महाकाव्यमपि विरचितम्।

अस्य व्याकरणविज्ञानं समस्तं विश्वं मोहयति। समग्रभाषायाः सारं निष्कास्य लघुकायग्रन्थे उपस्थापनरूपा ईदृशी व्याकरणप्रणाली नूनम् अद्यापि

न क्वापि आविर्भूता। एवं हि तेन महर्षिणा व्याकरणशास्त्रकाव्यनिर्माणे एव प्रायशः स्वजीवनं यापितम्। 'महात्मनां हि विलक्षणमृत्युर्भवति' इति नियमेन महर्षेः पाणिनेरपि सिंहासनस्य वने सिंहेन मृत्युरभूदिति पञ्चतन्त्रस्य- 'सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः' इत्यादिकथा प्रसङ्गा-दुपलभ्यते।

## ( २ ) संस्कृत-भाषा

### ( सुरभारती। देववाणी। अमरवाणी )

'संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः'
अमृतं मधुरं सम्यक् संस्कृतं हि ततोऽधिकम्।
देवभाष्यमिदं यस्माद् देवभाषेति कथ्यते॥
यावद् भारतवर्षं स्याद् यावद् विन्ध्यहिमाचलौ।
यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम्॥

सुरभारत्याः साहित्यस्य प्राचीनतमत्वे, सर्वभाषासाहित्यानां दैशिकानां वैदेशिकानां च मूलभूतत्वे अत्यन्तमुपादेयत्वे च नास्ति लेशतोऽपि सन्देहः भाषा-तत्त्वविदां विद्वन्मूर्धन्यानाम् माधुर्ये गाम्भीर्ये सौन्दर्येऽपि अन्यासां सर्वासां भाषाणां मूर्धन्यैव इयं सुरभारती। सर्वासां गिरामियं जननी इति हेतोः कस्यामपि भाषायां प्रावीण्यम् आसादयितुम् अस्याः अध्ययनस्य परमावश्यकत्वं प्रतिक्षणम् अनुभवन्ति भाषातत्त्वविदः। संस्कृतभाषा भारतीयानाम् अनुपममक्षयं पैतृकं धनम्। यावद् एतद् धनं भारतमधिकरोति न जगति कोऽपि देवस्तावद् देशमिमं ज्ञानेऽधरीकर्तुं प्रभविष्णुः।

संस्कृतभाषायाः इदं गुरुतरं वैशिष्ट्यमस्ति यद् अस्यामेकस्य शब्दस्य अनेके समर्थाः सन्ति। अस्याः व्याकरणमपि अनुपमम्। एतच्च प्रमाणयति यत् परस्सहस्रवर्षेभ्यः प्रागपीयं भाषा चरमां समृद्धिम् अभजत। चत्वारो वेदाः उपवेदाः ब्राह्मणग्रन्थाः आरण्यग्रन्थाः उपनिषत्पुराणेतिहासधर्मशास्त्रादयश्च सर्वे संस्कृते एव संगृहीताः सन्ति। तेषां परिज्ञानार्थं संस्कृतस्य स्वाध्यायः अत्यन्तम् आवश्यकः। विदेशेष्वपि संस्कृतस्य महान् प्रचारः पुरा आसीत्। अधुनाऽपि अमेरिका-रूस-इङ्गलैण्डप्रभृतिषु देशेषु संस्कृतभाषाग्रन्थाः अनूद्यन्ते प्रचार्यन्ते अभि-

नीयन्ते सम्मान्यन्ते च। अतः भारतवर्षस्य विश्वस्य च अखिलप्राणिनां कल्याणाय तापत्रयशमनाय च संस्कृतसाहित्यस्य संरक्षणे प्रचारे च सर्वैरेव भारतीयैः महान् प्रयत्नो विधातव्यः।

## ( ३ ) विद्या

### ( विद्याधनं सर्वधनप्रधानम्। किं किं न साधयति कल्पलतेव विद्या )

इह जगति विद्यैव सर्वप्रधानं धनमस्ति। विद्या माता इव रक्षति, पिता इव हिते नियुङ्क्ते कान्ता इव खेदमपनीय अभिरमयति। किं बहुना, विद्या कल्पलता इव सर्वकार्यसाधिका अस्ति। मनुष्याणां हृदये अन्धतमसावृते बहुविधाः नाना-विषयाश्च शक्तयः तिष्ठन्ति। ताः न स्वतः प्रकाशन्ते। शिक्षया दूरीकृते तस्मिन् तमसि तेजोऽवरोधिनो, तास्ताः शक्तयः प्रकाशमासाद्य पुमांसं प्रतिष्ठाम् आनयन्ति। तेनैव च प्रकाशेन मनुष्याणां शीलं शुद्धयति, स्वभावो विवेकभाग् भवति, चरित्रं चारुताम् अञ्चति, वार्तालापः परिपक्वप्रबोधो भवति। विद्या एव सर्वधनानां मूलम्, अनेकसंशयोच्छेदिका, परोक्षार्थस्य दर्शिका चाऽस्ति। विद्या नरस्य समुन्नति-पथं विशदीकरोति, बुद्धिं प्रखरीकरोति, कर्तव्यपालनपरां धियम् आदधाति। अत एव इह लोके विद्या सर्वश्रेष्ठं धनम् अस्ति। सुखस्य परमं कारणं विद्यैव। विद्यया यावज्जीवनं तृप्तिर्भवति। विद्या विनयं ददाति, विनयात् पात्रतां याति, पात्रत्वाद् धनमाप्नोति, धनात् धर्मं ततः सुखम् एति। इत्यलमतिविस्तरेण, 'विद्याधनं सर्वधनप्रधानम्'। तदुक्तम्—

न चौरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम्॥

अपि च—

मातेव रक्षति पितेव हिते नियुङ्क्ते कान्तेव चाऽभिरमयत्यपनीय खेदम्।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं, किं किं न साधयति कल्पलतेव विद्या॥

## ( ४ ) विद्यालयः

### ( शिक्षा-संस्था, ग्राम्यपाठशाला, शिशुसदनम् )

नगराद् बहिः एकान्ते सुरम्ये स्थले विद्यालयस्य भवनानि दर्शकानां चेतांसि हरन्ति। विद्यालयः देशस्य सर्वस्वम् अस्ति। अत्र पुस्तकानाम् एव पठनं पाठनं

च न भवति, अपि तु सदाचारस्य पाठोऽपि पठ्यन्ते छात्रैः। विनयस्याऽनुशासनस्य च प्राथमिकं शिक्षणम् अत्रैव भवति। समाजसेवायाः देशभक्तेश्चात्र शिक्षां छात्राः गृह्णन्ति।

महाविद्यालये अध्यापकानां संख्या षष्टिः तथा छात्राणां संख्या शतादधिकं भवति। महाविद्यालयस्य अध्यापकाः विविधविद्यापारङ्गताः शिक्षणकलानिपुणाः भवन्ति। महाविद्यालये अन्यप्रान्तेभ्योऽपि छात्रा अध्ययनार्थं समागच्छन्ति। क्रीडने, धावने, तरणे, अनुशासने, संयमे, समाजसेवायाम्, देससेवायाम्, प्रतियोगितापरीक्षासु, भाषणप्रतियोगितासु च ये छात्राः प्रथमं स्थानं लभन्ते ते वार्षिकोत्सवावसरे पुरस्कृताः भवन्ति। विद्यालयस्य अनुशासनपालकाः छात्राः हृष्ट पुष्टशरोराः, विकसितवदनाः, भद्रवेशाश्च भवन्ति।

महाविद्यालयस्य एकदेशे, तदन्तिके, ग्रामे ग्रामे, नगरखण्डे वा एका पाठशाला 'वेसिकस्कूल' नामकं शिशुसदनं वा शिक्षाधिकारीणा संस्थाप्यते। ग्राम्य-पाठशालायाः लाभः प्रचुरप्रचारको भवति। अत्र शिशुभिः प्रारम्भिकी शिक्षा निःशुल्कं लभ्यते। यः व्ययसाध्यां शिक्षाम् अधिगन्तुम् अनीशः तस्याऽपि साक्षरताऽत्र जायते। प्रत्येकशिशोः गुणावगुणौ ज्ञात्वा अध्यापकः तस्य गुणानां समृद्धये दोषाणाम् अपचयाय च प्रयतते। एषा पाठशाला सारल्येन जीवननिर्वाहं मितव्ययशीलतां च शिक्षयित्वा शिशुं भाविजीवनयात्रायां प्रशस्तयति।

आसु ग्राम्यपाठशालासु पठनं लिखनं प्रारम्भिकगणितं च अध्यापकेन शिक्ष्यते सम्प्रति ग्राम्यपाठशालानां ह्रासस्य समयः समुपस्थितः। नवीनयुगस्य नीति-रीती अनुसृत्य चालिताः एव वेसिकपाठशालाः सर्वत्र स्थाप्यन्ते। प्राचीनग्रामपाठशाला यत्र विद्यतेऽपि तत्राऽपि तस्याः अवस्था शोचनीयैव। तदीयान् दोषान् दूरीकर्तुं प्रयस्य यदि पुनः प्रतिग्रामं प्रतिपल्लि च तासां प्रतिष्ठापनं क्रियते तदा महान् उपकारः कुतो भवति भारतवर्षस्येति।

## ( ५ ) स्त्री-शिक्षा

मानवजातेः चतुरस्रसमुन्नतौ पुरुषाणां स्त्रीणां च परस्परं बुद्धिपूर्वकस्य सह-योगस्य अपरिहार्यत्वेन आवश्यकता केन नाऽनुभूयते। यथा एकेन चक्रेण रथस्य

गतिर्न भवति तथैव स्त्रीणां सहयोगेन विना स्वसमुन्नतिः साधयितु न शक्यते पुरुषैः।

'सत्यां शिक्षायां स्त्रियो नश्यन्ति' इति यदुक्तं तन्न मनोरमम्, सत्यं दुःशिक्षया तथा भवति, परं भारतीयां संस्कृतिमनुसृत्य तासां शिक्षा तु तासां पातिव्रत्ये निष्ठां प्रेमपरायणतां दासोपदगौरवं च समेधयन्ति।

'शिक्षिताः स्त्रियः पुरुषैः स्पर्धेरन्' इत्यपि अलीकमेव वचः। शिक्षया जनित-विवेकानां तासां कर्तव्यज्ञानोदये जाते स्पर्धाबुद्धिस्तु प्रथममेव नश्यति, तदनु प्राचीनमादर्शं पुरतः कृत्वा प्रदीयमानया शिक्षया मनसः साधुपथे प्रवृत्तिः सम्पाद्यते, तथा च स्पर्धायाः कथैव नोदयते।

स्त्रियो हि गृहाधिष्ठात्र्यो मन्यन्ते। जगति यावन्तः अभ्युदयभाजो दृश्यन्ते जनास्तेषां देव्योऽवश्यं प्रबन्धचतुरा स्युः। अन्यथा बहु अर्जयन्तोऽपि पुरुषाः स्त्रीभिः वृथाव्ययविनियुक्तसाधनाः सन्तः अत्यर्थम् उद्विजेयुः क्लेशं च सहेरन्।

बालिका शिक्षिताः स्युः इत्यपि गृहस्थानां कर्तव्येषु प्रधानं कर्तव्यम्। एतच्च कार्यं यथा दयाद्रुतचित्ताभिः स्त्रीभिः साधु सम्पाद्येत न तथा पुरुषैः। अशिक्षिताश्च मातरः न कथमपि तदनुष्ठाने प्रभवेयुः। अतः विना द्रव्यव्यय सन्ततीनां जीवनं शिक्षया साधु समुत्कर्षयितुम् अपि स्त्रीणां शिक्षणम् आवश्यकम्।

किं बहुना अद्यत्वेऽपि प्रभावतीराजे-क्षमाराव-विजयालक्ष्मी-इन्दिरागान्धी-प्रभृतयः भारतालङ्कारभूताः सर्वजनसम्मानमासादयन्ति शिक्षाप्रभावेणैवेति। स्त्रीणां शिक्षया हि कुलमुज्जलं श्रीसमृद्धिश्च समुदयते।

## ( ६ ) छात्र-जीवनम्

( छात्रधर्मः। छात्राणामध्ययनं तपः। गुरुभक्तिः )

यथा खनन् खनित्रेण नरो वार्यधिगच्छति।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति॥

मानवजीवने अस्मिन् गुरुतमं सौख्यं छात्रजीवने एव लभ्यते। चिन्ताराक्षसी भीत्यैव जीवनेऽस्मिन् न प्रविशति। हर्षविह्वलानां छात्राणां कूर्दमानं समूहं दृष्ट्वा कस्य चित्तं न स्पृहयते एषां जीवनाय। तथापि छात्राणां बहूनि कर्तव्यानि सन्ति। यतो हि छात्रजीवनमेव आगामिजीवनस्य मूलम्।

विद्याध्ययन हि छात्राणां कृते मुख्यं तपोऽस्ति। तत्र च शरीरस्य, मनसः, आत्मनश्च विकासोप्यनिवार्य एव। एषां मध्ये एकस्याप्यविकासो न समुचितः, यतो वास्तविकं विद्याध्ययनं तु एषां विकासेनैव जायते।

जीवनेऽस्मिन् छात्राणां मनसि ये सद्भावाः अङ्कुरिताः भवन्ति ते एव पश्चात् पल्लविताः पुष्पिताः फलिताश्च जायन्ते। छात्राः एव भाविनः नागरिकाः स्वकीय-ज्ञानालोकेन सदाचारेण सदुपदेशेन च राष्ट्रस्य समाजस्य च उद्धारकाः भविष्यन्ति। आदर्शविद्यार्थिनः एव राष्ट्रस्य दारिद्रयस्य अज्ञानस्य अकर्मण्यतायाश्च अपहारकाः भविष्यन्ति। छात्रैः शरीरेण वलिष्ठैः मनसा पवित्रैः बुद्धया दृढनिश्चयैः सर्वतोभावेन देशभक्तैश्च भाव्यम्।

इन्द्रियाणां निग्रहणं छात्रैः कर्तव्यमेव। इन्द्रियः पराजिताः छात्राः कदापि साफल्यं नाधिगच्छन्ति। गुरुभक्तिस्तु छात्रजीवनस्य अनिवार्यमङ्गम्। तां विना न कोऽपि छात्रो विद्योपार्जनं कर्तुं क्षमः। उपार्जिताऽपि तस्य विद्या साफल्यं न लभते। मितव्ययिताऽपि छात्राणाम् अन्यद् गुरुतरं कर्तव्यमस्ति। वहवोऽभि-भावकाः प्रेमाऽभिभूताः सन्ततीनामुच्चशिक्षणार्थं स्वकीयं सर्वस्वं व्ययीकर्तुं सदैव सन्नद्धाः दृश्यन्ते, परं छात्राः तेषां धनानि निरनुक्रोशतया व्ययन्ते। न ह्यन्यः गुरुतरो दुर्गुणोऽस्मात्।

स्वदेशस्य अभ्युत्थानाय, समाजोद्धाराय च आत्मानं योग्यं कर्तुम् अध्ययने स्वास्थ्यरक्षणे चरित्रनिर्माणे च महान् यत्नो विधातव्यश्छात्रैः। दुराचारिपुरुषाणां सङ्गात्, अश्लीलग्रन्थानाम् अध्ययनात्, सदाचारविरोधिनां चित्रपटादीनां दर्शनात्, अश्लीलनृत्यगीताच्च भयङ्करात् सर्पाद् विषादपि च अधिकं भेतव्य विद्यार्थिभिः।

अनुशासन-नियन्त्रण-समयनिष्ठा-पुरुषार्थोदारता-सत्यवादिता--निर्भयता देश-भक्ति-विनोदप्रियताप्रभृतिभिः गुणैः अन्तेवासिनां जीवनं रत्नवत् चकासितुम् अर्हतीति।

## ( ७ ) विद्यालयोत्सवः

सर्वसाधारणोऽयं नियमः यत् सर्वेष्वपि विद्यालयेषु प्रतिवर्षं तदीयां संस्थापन-तिथिं महता संरम्भेण स्मरन्ति छात्राः। तत्रोत्सवे। सर्वे छात्राः सदस्याः व्य-वस्थापकाश्च अतिप्रसन्नाः दरीदृश्यन्ते। वस्तुतः विद्यालयस्येतिहासे तस्य वार्षिको-

त्सवस्य छात्रजीवने अधिकं महत्त्वं वर्तते । वर्षपर्यन्तं यां योग्यतां छात्राः सम्पादयन्ति तस्याः प्रदर्शनाय ते अस्मिन् एव उत्सवे अवसरं लभन्ते । एतादृशे अवसरे छात्राणाम् अभिभावकाः अपि विद्यालयस्य गतिविधम् अवगन्तुम् आयान्ति । अनेन उत्सवेन छात्रेषु पारस्परिक-सहयोग-प्रेम-सहानुभूतिभावनायाः विकासो भवति । अस्मिन् दिनावसाने छात्रसंघैः आयोजिता महती सभा भवति । तस्यां ते विशिष्टाऽतिथिसम्भाषणैः चरित्रनिर्माणस्य शिक्षां प्राप्नुवन्ति । उत्सवोऽयं तान् जीवनस्य लक्ष्यं प्रत्यग्रे सारयति । निर्विवादमेतत् सत्यं यद् अयमुत्सवः छात्रेषु नवीनप्रेरणास्फूर्तिं जागर्तिं च भृशं करोतीति ।

## ( ८ ) अनुशासनम्

कस्याऽपि व्यवस्थितस्य नियमसमुदायस्य पालनम् 'अनुशासनम्' उच्यते । अथवा कस्यापि नियन्तृतया नियुक्तस्य वचसः अनुवर्तनम् 'अनुशासनम्' । एकमपि प्रश्नम् अकृत्वा तदनुवृत्तिः साधीयसोऽनुशासनस्य स्वरूपमवधार्यम् । कापि व्यवस्थिता संस्था अनुशासनं विना न प्रचलितुं पारयति । तद्विना तस्याः गतिरतीव दुरन्ता जायते । यथा नावि प्रसार्यमाणवस्त्रप्रसारसङ्कोचरज्जवो यदि नियमपूर्वकं न चाल्येरन् मध्येसरिन्नौर्विपद्यते तथैव ते ते पुरुषाः यदि दलप्रधानमक्षरशो नानुवर्तेरन् कोऽपि समुदायः सफलप्रयासो न भवेत् । अस्माकं जीवनस्य सर्वास्वपि दशासु प्रकामम् आवश्यकम् अनुशासनं नाम बाल्ये यौवने प्रौढत्वे वार्धकेऽपि वा अनुशासनमपेक्ष्यत एव । विद्यालये गृहे सार्वजनिकसंस्थासु च विना अदः कार्यं न चलति । बालको जातमात्र एव अनुशासनं शिक्षणीयः । एतेन तस्य भाविजीवनं तस्मै महत्त्वम् उपहरिष्यति ।

जीवने साफल्यमानेतुम् अनुशासनम् अत्यपेक्षितं वस्तु । तेन सर्वैरपि स्वहितम् अर्थयमानैः अनुशासनेन आत्मा नियमनीयः । परमात्मा सर्वानपि भारतीयान् साध्वनुशासनयन्त्रितान् विदधात्विति ।

## ( ९ ) व्यायामः

व्यायामपुष्टगात्रस्य वुद्धिस्तेजो यशो बलम् ।
प्रवर्धन्ते मनुष्यस्य तस्माद् व्यायाममाचरेत् ॥

धर्मार्थकाममोक्षरूपस्य पुरुषार्थचतुष्टयस्य सिद्धेर्निमित्तं शरीरं खलु । स्वस्थ-

शरीरं हि अध्यवसायं कर्तुं प्रभवति । शरीरस्य नीरोगतायाः अनेकानि साधनानि सन्ति । तेषु व्यायामस्याऽपि महत्त्वपूर्णं स्थानमास्ते ।

येन कर्मणा मनुष्यस्य तनोः, तद्द्वारा बुद्धेश्च उचितौ संस्कारोच्छ्रायौ भवतः, शरीरस्य सन्धिस्थलानि चलन्ति, धमन्यः स्पन्दन्ते रक्तं परिष्क्रियते, पाकक्रिया व्यवस्थाप्यते, सम्भवतां रोगाणाम् आक्रमणं प्रतिबद्ध्यते च तत् कर्म व्यायाम इति। मानवानां शरीरेण सम बुद्धेरतिघनिष्ठः सम्बन्धो वर्तते । शिक्षा यथा मनुष्याणां ज्ञानं परिमार्जयति तथैव व्यायामः तनुं समेधयति । एवं हि मानवानामिदं कर्तव्यं वर्तते यत्ते यथारुचि यथाविधि च कमपि व्यायामम् उपसेवेरन् । शरीरस्य अरोगितायै विकाशाय च व्यायामः प्रतिदिनं नियमतः कर्तव्यः । व्यायामेन शरीरे उत्साहस्य, चित्ते प्रसादस्य, प्राणेषु च जीवनस्य सञ्चारो भवति । अतः सर्वथा स्वास्थ्यं कामयमानैः 'धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्' इति च स्मरद्भिः सदा सेवनीयो व्यायाम इति ।

## ( १० ) सत्सङ्गतिः

**(सत्सङ्गतिः कथय किन्न करोति पुंसाम् । संसर्गजा दोषगुणा भवन्ति)**

कल्पद्रुमः कल्पितमेव सूते कामधुक् कामितमेव दोग्धि ।
चिन्तामणिः चिन्तितमेव दत्ते सतां तु सङ्गः सकलं प्रसूते ॥

सतां सज्जनां सङ्गतिः सत्सङ्गतिः । अनुकरणधर्मा मनुष्यः । स यादृशैः संवसति तादृश एव भवति तैस्तैः अन्यदीयैर्गुणदोषैर्युक्तः अतः सद्भिः एषणीयः संसर्गः, असद्भिश्च परिहरणीयः । सत्सङ्गतिप्रभावेण अबोधविक्लवाः नीचाः दुष्टाः अपि साधवो भवन्ति । किं बहुना सुगन्ध-पुष्पसंसर्गात् तुच्छः कीटोऽपि देवानां शिरः आरोहति तथा जडत्वं प्राप्तो पाषाणप्रतिमाऽपि देवत्वं याति । 'काचः काञ्चनसंसर्गाद् धत्ते मारकतीं द्युतिम्' । मानवः येन प्रकारेण मानवेन सह सङ्गतिं करोति स तथैव भवति । हीनैः सह हीनतां, समैः सह समतां, विशिष्टैः सह विशिष्टतां याति । साधुसङ्गतिस्तु चन्द्रचन्दनाभ्यामपि अधिका शीतला भवति । सत्सङ्गत्या मानवस्य ज्ञानवृद्धिर्भवति । साधुपुरुषैः सह उषित्वा मनुष्यताः जीवनस्य गम्भीरताम् अनायासेनैव अवबुध्यन्ते । सत्सङ्गत्या मानवस्य मानोन्नतिः, पुण्ये रुचिः उदेति पापाच्चोद्विजते मनः । सत्सङ्गत्या दुर्जनोऽपि प्रेम-सहानुभूति-दया-क्षमा

सत्य-शान्ति-त्याग- परोपकाराणां साक्षात् मूर्तिर्जायते। सत्सङ्गतिः सर्वकल्याणं कर्तुं शक्नोति, अतः विद्या-यशो-बलवृद्धये सर्वतोभावेन सत्सङ्गतिः कर्तव्येति।

बाल्यकाले बालकस्योपरि सङ्गत्याः प्रभावः बलवत्तरो भवति। बालको यादृशैः बालकैः सह सङ्गतिं करिष्यति ध्रुवं स तादृश एव भविष्यति। सत्सङ्गत्या मानवः उन्नतिपदं लभते। सज्जनैः सह मैत्रीं कुर्वाणः कदापि नावसीदति। सत्सङ्गतिः धियः जाड्यं हरति, वाचि सत्यं सिञ्चति, पापं दूरीकरोति, कीर्तिं च दिक्षु तनोति, कुमतिं दूरीकरोति चेतः विमलीकरोति, चिरन्तनं पापं च चुलुकीकरोति। सतां सङ्गतिः किमु न मङ्गलमातनोति। तदुक्तम्—

जाड्यं धियो हरति सिञ्चति वाचि सत्यं, मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं, सत्सङ्गतिः कथय किं न करोति पुंसाम्॥

अपि च—

दूरीकरोति कुमतिं विमलीकरोति, चेतश्चिरन्तनमघं चुलुकीकरोति।
भूतेषु किं च करुणां बहुलीकरोति, सङ्गः सतां किमु न मङ्गलमातनोति।

## ( ११ ) भारतवर्षः

( भा = ) भाति सर्वेषु वेदेषु ( र = ) रतिः सर्वेषु जन्तुषु।
( त = ) तरणं सर्वतीर्थानां तेन भारतमुच्यते॥

आसीत् पुरा राज्ञः दुष्यन्तस्य पुत्रो भरतो नाम चक्रवर्ती राजा। तेन शासितो देशः 'भारतवर्ष' इत्यभिधानं प्राप्तः। मत्स्यपुराणानुयायिनस्तु— भरतीति भरतः = मनुः, तस्याऽयं भारतो देशः इति वदन्ति। अस्तु तावत् प्रकृति देव्या अनुगृहीतोऽस्माकं जन्मभूमिः भारतवर्षोऽस्ति। अत्र गङ्गा–यमुना–नर्मदा–कावेरीप्रभृतयः महानद्यः सन्ति। प्रधानः पर्वतः हिमालयः अस्य देशस्य मुकुटः अस्ति। पर्वतोऽयं भारतस्य प्रहरी अप्युच्यते, यतः मेघमण्डलादप्युन्नतानि शृङ्गाणि दुर्लङ्घ्यानि सन्ति। देशस्याऽस्य चरणौ रत्नाकरः प्रक्षालयति। भारतवर्षेऽस्मिन् पुराणमहाभारतादिरचयिता वेदव्यासः, रामायणप्रणेता महर्षिवाल्मीकिः, भक्त-प्रवराः—प्रह्लाद ध्रुवादयः चक्रवर्तिनृपतयः, वराहमिहिरादयः ज्योतिर्विदः, धन्वन्तरि-सुश्रुत-जीवक-काश्यप-वाग्भटादयः आयुर्वेदज्ञाः, गौतम-कपिल-काणाद-गङ्गेशोपाध्यायादयः नैयायिकाः, पाणिनि-कात्यायन-पतञ्जलिप्रभृतयः वैयाकरणाः,

श्रीशङ्कराचार्य-रामानुजाचार्य-रामानन्दाचार्य-वल्लभाचार्यादयः वेदान्तशास्त्र-पारङ्गताः, बुद्धदेव-महावीरादयः धर्मप्रवर्तकाः, अश्वघोष-भवभूति-माघ-कालिदासादयो महाकवयः, चाणक्यादयः राजनीतिज्ञा, भारती-गार्गी-लीलावती-प्रमुखानि स्त्रीरत्नानि इमं देशमलञ्चक्रुः भूतलेऽस्मिन् देशोऽयं श्रेष्ठतमः, यतः देवाः अपि अस्माकं भारतवर्षे जन्मग्रहणाय स्पृहयन्ति । उक्तं च विष्णुपुराणे—

गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥

## ( १२ ) देशभक्तिः । जन्मभूमिः

### ( जननी जन्मभूमिश्च स्वर्गादपि गरीयसी )

यस्मिन् देशे यस्य जन्म तं देशं प्रति तदीया भक्तिः देश-भक्तिः । यो मानवः यत्र जन्म लभते सैव तस्य जन्मभूमिः कथ्यते । अस्मिन् जगति सर्वेषां बहुमूल्य-वस्तूनां मध्ये माता मातृभूमिश्चैव एते द्वे श्रेष्ठे । असारे खलु संसारे सर्वे अलभ्याः अपि पदार्थाः परिश्रमेण लब्धुं पार्यन्ते, किन्तु माता पिता जन्मभूमिश्च न केनापि-यत्नेन प्राप्यते । तदुक्तं—

जननी जन्मभूमिश्च जाह्नवी च जनार्दनः ।
जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः ॥

जननीवत् जन्मभूमिरपि प्राणेभ्योऽपि स्नेहतमा तथा स्वर्गादपि गरीयसी । मनुष्याणां मनसि जाते देशभक्तिप्रवेशे तदीयं जीवनमेव स्वदेशस्य कृते भवति, ते तत आरभ्य तदीयां स्थितिम् उन्नेतुम् एव प्रयतन्ते । सत्याम् आवश्यकतायां ते प्राणानपि पणीकर्तुं कृतसङ्कल्पास्तिष्ठन्ति । आजाद-चन्द्रशेखर-भगतसिंह नेताजी-सुभाषचन्द्रवसुप्रभृतयोऽनेके वीरपुरुषाः स्वदेशार्थमेव स्वप्राणान् त्यक्तवन्तः । अस्यां च देशभक्तौ सम्पत्तेरावश्यकता नापतति, येन धनिमात्रविधेयता स्यात् । सर्वास्वप्यवस्थासु सर्वैरपि मनुष्यैः आत्मरुच्या स्वनिर्णीतक्रममनुसृत्य विधातुं शक्येयं देशभक्तिः । तदीया मात्रा लघ्वी बृहती वा भवतु । देशभक्तौ भूमिका-भूतायाः स्वदेश्यवस्तुषु प्रीतेः पालनमात्रेऽपि विधीयमाने कियत्या मात्रया देशभक्तिः कृता भवतीति ततोऽधिकां सेवां कुर्वन्तो भृशं देशभक्ताः कथयितुं शक्याः ।

अस्य देशभक्तिवह्नेर्ज्वाला यस्य हृदये कृतास्पदा तस्य कार्यान्तरेभ्यो विरक्तिर्जायते। जीवनसाधनमात्रम् अर्थयमानस्य तस्य जातायामपि कार्यान्तरप्रवृत्तौ तदर्थतामात्रम् अवगन्तव्यम्। अस्मिन् विषये महात्मागान्धी-राजेन्द्रबाबू-जवाहरलालनेहरूप्रभृतयो देशभक्ताः प्रसिद्धा एव। धन्याश्च इमे देशभक्ताः कल्पद्रुमाः येषां घनासु च्छायास्वद्य अस्माकं स्वतन्त्रो देशः सुखशान्तिम् अधिगच्छतीति।

## ( १३ ) परोपकारः

### ( परोपकाराय सतां विभूतयः )

अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

किमपि प्रत्यर्पणम् अनभिलष्य परकीयहितानुसंधानं परोपकारः। मनुष्याणां पुरुषार्थेषु धर्मकृत्यानां मध्ये परोपकारः अत्यन्तं समुत्कृष्टं कर्म अस्ति। येषु मनुष्येषु गुणोऽस्य नास्ति तान् मनुष्यतनुमाधाय चरतः पशूनेव अभिधातुं ममात्मनो निर्बन्धः।

परोपकारात् प्रबलं किमपि पुण्यम् अत्र जगति नास्ति। एष मानवानां हृदये पवित्रतां सहनशीलतां दयां भक्तिं प्रमाणं च प्रादुर्भावयति। परोपकारेणैव दरिद्र-निर्धन-निर्बलप्राणिनां प्राणरक्षा भवति। अयं परोपकारः सर्वेषां धर्माणां प्रथमो धर्मः। विद्यादानं तु परोपकारस्य श्रेष्ठतमो धर्मः। अन्यद् दत्तं वस्तु कियतः कालस्य कृते तदावश्यकतां शमयति, परं विद्या मानवानां जीवनसहचरी सती तान् सुखयति।

परोपकारः एकः दिव्यः महान् गुणोऽस्ति। संसारेऽस्मिन् नानाविधाः मानवाः दृश्यन्ते। यस्य यादृशः स्वभावः स तादृशम् आचारम् आचरति। केचित् परोपकारिणः भवन्ति, केचित् स्वार्थिनश्च। परोपकारेणैव सुप्रसन्नाः भवन्ति। परोपकारेणैव कायः विभाति। तदुक्तम्—

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन।
विभाति कायः करुणापराणां परोपकारैर्न तु चन्दनेन॥

न केवलं मानवेष्वेव परोपकारभावना वर्तते, देवेषु पशु पक्षि-वृक्षादिष्वपि च विद्यते। प्रकृतिः परोपकारस्यैव शिक्षां ददाति। नद्यः स्वयमेव जलं न पिबन्ति,

वृक्षाश्च स्वयमेव फलानि न खादन्ति। किन्तु तासां जलं, तेषां फलानि च परोपकाराय एव। तदुक्तम्—

स्वयं न खादन्ति फलानि वृक्षाः पिबन्ति नाम्भः स्वयमेव नद्यः।
धाराधरो वर्षति नात्महेतोः परोपकाराय सतां विभूतयः॥

पुराणादौ परोपकारस्य बहुमहत्त्वं प्रतिपादितम्। दिवङ्गतेऽपि परोपकारी यशःशरीरेण सदैव अमरत्वं प्राप्नोति। परोपकारभावयैव नरपतिः शिविः पदार्थं स्वशरीरमांसमपि छित्त्वा ददौ। रन्तिदेवः क्षुधार्तोऽपि स्वभोजनं चाण्डालाय समर्पितवान्। परोपकारस्य सर्वाङ्गीणं स्वरूपं मङ्गलमयम् अवगत्य यथाशक्ति तत्र वर्त्मनि स्थेयं विचारचतुरैः। यतः—'धन्या नरा विहितकर्मपरोपकाराः॥' इत्यलमतिविस्तरेण।

## ( १४ ) उद्योगः

### ( उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः )

अस्मिन् संसारे समस्तजनाः सुखमिच्छन्ति परन्तु विरला एव सुखं प्राप्नुवन्ति। आलस्यमेव जनस्य शत्रुरस्ति येन जनः अनिष्टं प्राप्नोति। उक्तं च—

आलस्य हि मनुष्याणां शरीरस्थो महान् रिपुः।
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति॥

पुरुषार्थेन जनाः सुखमधिगच्छन्ति। उद्यमेनैव निर्धना धनिनो भवन्ति। सर्वमुद्योगेनैव सिध्यति। उद्योग-बलेनैव पाण्डवा नष्टमपि राज्यमुपलब्धवन्तः। कालिदासः उद्योगमाश्रित्य कविकुलगुरुः बभूव। लोकमान्यतिलकगोखले-महात्मा-गान्धि-प्रभृतिभिः देशभक्तैः पुरुषार्थेनैव वैदेशिक-पारतन्त्र्याद् इयं मातृभूमिः विमुक्ता कृता। कार्याणि उद्यमेनैव सिध्यन्ति। लक्ष्मीः उद्योगिनं पुरुषमुपैति। अत एवोक्तम्—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या, यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥

भाग्यवादिनः कथयन्ति यत् सर्वत्र भाग्यं फलति परन्तु अनुद्यमेन ते दुःखमेव प्राप्नुवन्ति। ते न जानन्ति यत् यथा एकेन चक्रेण रथस्य गतिर्न भवेत्,

तथैव उद्यमेन विना दैवं न सिध्यति। अस्माकमधीनं पौरुषम्, फलं तु दैवाधीनम्। अत एव फलाशां परित्यज्य कर्माणि कर्तव्यानि। भगवद्गीतायां श्रीकृष्णः एतद् एव उपादिशत्—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥

यथा सुप्तस्य सिंहस्य मुखे मृगाः न प्रविशन्ति, तथैव मनोरथैरेव कार्याणि न सिध्यन्ति। ईश्वरोऽपि उद्योगिनः साहाय्यं करोति। अतः सर्वैः उद्योगः करणीयः। उक्तं च—

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥
उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः।
षडेते यत्र वर्तन्ते तत्र देवः सहायकृत्॥

## (१५) हिमालयः। नगाऽधिराजः

भारतवर्षस्योत्तरस्यां दिशि उच्चतमः पर्वतः हिमालयोऽस्ति। अस्य शिखर-प्रदेशाः सदा हिमेनाच्छादिताः। अस्मात् कारणात् अयं 'हिमस्य आलयः हिमालयः' इति कथ्यते। अयं सर्वेषां पर्वतानामुच्चतमः, अत एव नगाधिराजः अपि-कथ्यते प्रजापतिः यज्ञांगयोनित्वमवेक्ष्य कल्पितयज्ञभागं तं शैलाधिपत्यं स्वयमन्वतिष्ठत्। हिमालयस्य लांगूलविक्षेपविसर्पिशोभैः चन्द्रमरीचिगौरैः बालव्यजनैः चमर्यः गिरिराजशब्दमर्थयुक्तं कुर्वन्ति। अनन्तरत्नप्रभवस्य हिमालयस्य हिमं सौभाग्यविलोपि न जातम्। यतः एको दोषो गुणसन्निपाते निमज्जति यथा इन्दोः किरणेषु अङ्कः निमज्जति। अस्य हिमालयस्य आमेखलं सञ्चरतां घनानां छायामधः वृष्टिभिः उद्वेजिता ऋषयः आश्रयन्ते। तत्र स्थिताः वन्यकरिणः कपोलकण्डूः विनेतुं सरलवृक्षेषु कपोलस्थलानि घर्षन्ति, तदा वृक्षेभ्यः क्षरितेन क्षीरेण संजातः गन्धः हिमाद्रेः सानूनि सुरभीकरोति। हिमालयस्य गह्वराणि दिवाभीतमिवान्धकारं दिवाकराद्रक्षति। यस्मिन् दृष्ट्वापि हतद्विपानाम् केसरिणां तुषारस्रुतिधौतरक्तं पदं नखरन्ध्रमुक्तैः मुक्ताफलैः किराताः मार्गं विदन्ति।

अयं पर्वतः भारतवर्षस्य मुकुटः अस्ति। अयं भारतवर्षस्य प्रहरी अप्युच्यते। यतः अस्य मेघमण्डलादप्युन्नतानि शृङ्गाणि। दुर्लङ्घ्यानि सन्ति। सर्वेषां तुङ्गतमम्

एवरेष्टाख्यमस्य शृङ्गम् । हिमालयः भारतवर्षस्य परोपकारी अस्ति। अयं गङ्गायाः, सिन्धोः, ब्रह्मपुत्रस्य, अन्यासाञ्च बहूनां नदीनां प्रभवस्थानम् । संसार-विमुखानां अस्य गुहाः आश्रयस्थानानि । हिमालये बहूनि रत्नानि विद्यन्ते। तस्मिन् नानाविधाः ओषधयोऽपि सम्भवन्ति । अयमेव नगः भारतवर्षस्य उत्तर-प्रदेशेषु वर्षायाः हेतुरस्ति । अयमेव गिरिः शत्रुभ्यः अस्माकं देशं रक्षति यतः अस्यातिक्रमणमतिदुष्करम् । नैनीताल–मंसूरी–अल्मोडा–शिमलादीनि नगराणि अस्योपत्यकायाम् विराजन्ते । ग्रीष्मर्तौ धनिकाः स्वास्थ्यलाभाय तत्र गच्छन्ति, आनन्दातिरेकेण इतस्ततः परिभ्रमन्ति च । महाकविकालिदासेन कुमारसम्भवस्य आद्ये सर्गे लिखितम्—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥

## ( १६ ) शीलं परं भूषणम्

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतत् प्रशस्यते ॥

शीलं तु भूषणानि सुदूरम् अधरीकरोति । इदं सततं भूषणम्, भूषणान्तराणि क्षयीणि । परिशुद्धा व्युत्पत्तिः कदाचिद् उद्भासते कदाचिन् मन्दादये, परिष्कृता बुद्धिरपि कदाचित् क्रमते कदाचिन् प्रतिहन्यते कृत्येषु, किन्त्वेदं शीलं भूषणतां व्यभिचर्य्य न कदाचिद् भूष्यतां याति । न चाऽत्रैव पर्यवस्यत्यस्य प्रकर्षः, भूषणानां सर्वेषां कारणमपीदं भवति। तदेवंमहिमोपेतं शीलं नाम। 'शुचौ तु चरिते शीलम्' इति, 'शीलं स्वभावे सद्वृत्ते' इत्यभिधानकृतः । शीलवानेव कालोचितं जानाति व्यवहर्तुम् ।

इदं चाऽवश्यमभ्युपेयं—न खलु कश्चिच्छीलसम्पत्ति पूर्वरूपेण उपवर्णयितुं सहते न वा पारयतं शीलाङ्गभूतान् समुदितान् अनुक्रमितुं गुणान् । यत् सत्यमेत-दर्थकः प्रयत्नोऽपि उपहास्यो भवति, इदम् अननुकार्यं चाऽनुपमेयं च ।'गगनं गगनाकारं सागरः सागरोपमः' इतिवत् शीलं शीलेनैव सदृशम् । तदुक्तम्—

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमः,
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता,
सर्वेषामपि सर्वभूषणमिदं शीलं परं भूषणम् ॥

## ( १७ ) ग्राम्यजीवनम्, नागरकजीवनम्

ग्रामो हि ईश्वरकृतः, नगरं च मानवकृतम् अस्ति। ग्रामेषु यथा अकृत्रिमं सुखदं सौन्दर्यं न तथा नगरेषु। मन्दमारुतान्दोलितपल्लवाः विस्तारवतीः क्षेत्रभक्तीः शाद्वलान् गोचरान्, वनस्पतीन्, विविधानि नवानि शष्पाणि च आलोक-मालोकं प्रह्लादते मुग्धा जनपदो जनः। प्रशान्तायां प्रत्यूषवेलायां क्षितिजमाक्रम-माणस्य बालार्कस्य, अभिनवोदितस्य कुमुदिनीनायकस्य चन्द्रस्य वा सन्दर्शने मन्दसुरभिसमीरणसेवने ग्रामीणाः एव ईशते न नागरकाः।

नगरेषु तु सर्वं कृतकम्। यथा--कृतकः स्नेहः, कृतकः आदरः, कृतकं दाक्षिण्यम्, कृतको वेषः, कृतकं सुखोपकरणम्, कृतकाः गृहाः, कृतकाः आरामाः, कृतकाः खेलाश्च। ग्रामे प्रायः सर्वम् अकृतकमिति निश्चप्रचम्।

ग्रामीणाः हि प्रायेण स्वस्थाः, महाकायाः, परिपुष्टाङ्गाः, दृढसन्धयः, दीप्तिम-द्वपुषः, महाप्राणाश्च भवन्ति। नागरकास्तु—बहुशः अस्वस्थाः, अल्पतनवः, पेलवाङ्गाः, कृशकायाः, विवर्णवदनाश्च भवन्ति।

ग्रामा हि—महामनीषिणां, तपस्विनां, महाकवीनां च जन्मभुवः, न नगराणीति सुस्थितः, उत्कर्षप्रकर्षो ग्रामाणाम्। ग्रामीणाः स्वयमेव समये-समये मनोरञ्जनार्थम् अभिनयादिकं कुर्वन्तः आनन्दम् अनुभवन्ति। ग्रामाधिदेवतानां गुणानुवर्णनाय महापुरुषाणां चरित्रश्रवणाय वा अतीवानन्दोल्लासेन ग्रामीणाः एकत्र सम्मिलन्ति

ग्रामे प्रायः सर्वाणि गृहोपयुक्तकार्याणि अन्नेन भवन्ति। नापितोऽपि कस्मै-चिदपि कार्याय द्रव्यं न गृह्णाति। ग्रामेषु पुरुषाः सदैव उद्यमशीलाः भवन्ति। ते सुवासितं भोजनं कौषेयवस्त्राणि वा नाऽभिलषन्ति। स्वभावेन ते धर्मभीरवः सौम्याः भवन्ति। ग्रामीणाः अस्माभिः राजपुरुषाश्च समादरणीयाः सन्ति, यतः ते कठोरतमश्रमेण विविधानि अन्नानि शाकानि फलानि च उत्पादयन्ति, यैः, नागरकाः जीवन्ति।

अधुना ग्रामाणाम् उन्नतये शासकाः सतर्काः सन्ति । पञ्चवर्षीययोजनानुसारेण बहवः ग्रामाः विद्युदादिभिः नवीनसुख-सामग्राभिः युक्ताः अभवन् । क्षेत्राणां सेचनाय जलनालिकानां प्रसारः सर्वत्र यथा स्यात् तथा शासकानामुद्योगः प्रचलयति । ग्रामकलहानां निर्णयाय ग्रामे ग्रामे समितयः स्थापिताः सन्ति । काले स्वतन्त्र-भारतस्य ग्रामाः प्रशस्ताः भविष्यन्तीति निश्चप्रचम् ।

## ( १८ ) दीपावली । दीपमालिका

रक्षाबन्धनम्, विजयादशमी, दीपावली, होलिकोत्सवश्चेति चत्वारः मुख्योः-त्सवाः भारते सन्ति । तेषु दीपावलीमहोत्सवः सर्वानपि सांस्कृतिकसमारोहान् अतिशेते । दीपावल्याः कतिपयदिवसपूर्वमेव जनाः नगराणि ग्रामांश्च ससमारोहं संस्कुर्वन्ति । गृहाणि शुचीकुर्वन्ति, चूर्णेन धवलीकुर्वन्ति, मनोहरैः चित्रैः अन्यान्यैश्च कदलीस्तम्ब-तोरण-पताकादि-प्रसाधन-साधनैः गृहकुड्यानि अलङ्कुर्वन्ति च । अस्मिन् पर्वदिवसे रजनीमुखे लक्ष्मीपूजाद्वारा जनाः निजजीवन-स्थितिम् उच्चतरां कर्तुं प्रयतन्ते । अनुपमादीनां दीपज्योत्स्नायाम् अग्निकर्मकेलयोऽपि न न्यूनां सौन्दर्यानुभूतिं जनयन्ति ।

कृतगृहदेवतादीपदानविधयो नैष्ठिकाः उल्मुकं भ्रामयन्तः 'शस्त्राऽशस्त्रहतानां चे' ति मन्त्रांश्च उच्चारयन्तः निजपितॄन् स्वर्गं गमयितुं तन्मार्गम् अवलोकयन्ति । बालकाश्च तदनु किमप्युद्देश्यं विनैव मनोरञ्जनार्थमेव शतमुल्काः भ्रामयन्तः मार्गान् चत्वराणि च प्रकाशयन्ति, पटाकादिना पटपटाकुर्वन्ति च ।

अस्यामेव कार्तिककृष्णाऽमायाम् उपासकैः महाशक्तेः निशापूजनं महता समारोहेण सम्पाद्यते । पूजकाः आगामिवत्सराय च सुखं सम्पत्तिं च प्रार्थयन्ते ।

अयमुत्सवः कार्तिकमासस्य कृष्णात्रयोदशीतः शुक्लपक्षस्य द्वितीयां यावत् प्रचलति । इयं त्रयोदशी 'धन्वन्तरित्रयोदशी' नाम्ना प्रख्याता अस्ति । त्रयोदश्यां जनाः गृहोपकरणानि तैजसपात्राणि सति संभवे यथाशक्ति आभूषणानि च क्रीडन्ति । तद्द्वितीयदिने 'नरकचतुर्दशी' जायते । तस्यां हनूमतः जन्ममहोत्सवः यमराजस्य च पूजनं भवति । 'लघुदीपावली' ति नाम्ना प्रसिद्धोऽयं दिवसः ।

दीपावलीमहोत्सवविषये एका जनश्रुतिः, यत् अद्यैव मर्यादापुरुषोत्तमः श्रीराम-चन्द्रः आहवे निशाचराधिपतिं रावणं हत्वा अयोध्यां प्रत्यागतः । चतुर्दशवत्सरान-

न्तरं सीतया लक्ष्मणेन च सहितं श्रीरामचन्द्रं प्राप्य सर्वे देशवासिनः दीपमालया तेषां स्वागतम् अकुर्वन् । ततः प्रभृति एव अस्योत्सवस्य प्रचारो जातः ।

## ( १९ ) सन्तोषः, धृतिः, धैर्यम्, सहनशीलता

### ( सन्तोष एव पुरुषस्य परं निधानम् )

'न योजनशतं दूरं बाध्यमानस्य तृष्णया । सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥'

सन्तोषः सर्वश्रेष्ठं धनमस्ति । ऐहिक-पारलौकिकोभयसुखशान्तिलाभाय सन्तोषस्य परमावश्यकता अस्ति । सन्तोषामृतसागरे मग्नः जनः चिरं सुखम् अनुभवति । असन्तुष्टो जनः अर्थलाभेऽपि अधिकं धनं प्राप्तुम् इच्छति । शती सहस्रं वाञ्छति, सहस्री च लक्षम् इच्छति, किन्तु लब्ध्वाऽपि मनोवाञ्छितं धनम् इतस्ततः परिभ्रमति—न कदापि असन्तोषी सुखमनुभवति । यस्य पार्श्वे सन्तोषः विराजते स सामान्योऽपि जनः राजानं तृणवत् मन्यते । करप्राप्तेऽप्यर्थे तस्य आदरः न भवति ।

सन्तोषस्य एवाऽपरपर्यायः— धृतिः, धैर्यम्, धारणा, सहनशीलतेति । कार्याणां साफल्याय धैर्यं परमावश्यकं भवति । धीराः महत्तरसंकटानि सरलतया तीर्त्वा सुखिनः भवन्ति । समुपस्थितेषु संकटेषु धैर्यं न त्याज्यम् । उक्तं च—

त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात् कदाचित् स्थितिमाप्नुयात् सः ।
जाते समुद्रेऽपि हि पोतभङ्गे सांयात्रिको वाञ्छति तर्तुमेव ॥

धैर्यमेव सत्यं रक्षति । धैर्यं विना न मनोनिग्रहः, मनोनिग्रहं विना परमात्म-प्राप्तिर्दुर्लभा । अतः लोकेऽस्मिन् ये साफल्यमिच्छन्ति, तैः सर्वैः धैर्यं धार्यम् । प्रत्येकस्य ईप्सितकार्यस्य सम्पादनाय धैर्यस्याऽस्ति महत्युपयोगिता । धैर्यमाश्रित्यैव एको विद्यार्थी अध्ययनतत्परो भवति । धैर्येणैव मानवः शोकसागरं तरति । अत एव जनैः धैर्यधारणे यत्नो विधेयः ।

## ( २० ) वसन्तः

एकस्मिन् वर्षे षड् ऋतवः सन्ति । सर्वेषु समयेषु वसन्ततुः सर्वोत्तमः अस्ति । अत एव एष ऋतुराजः कथ्यते । वसन्तः कामदेवस्य सखा अस्ति । ऋतूनां कुसुमाकरः वसन्तः एव अस्ति । वसन्ते मृगदृशां मानतन्तुच्छिदः, परभृतवयसां

कण्ठे पञ्चमं रागं लोलयन्तः स्मरविजयमहासाक्षिणः समीराः स्वैरं वान्ति। तदुक्तम् लताकुञ्जं गुञ्जन् मदवदलिपुञ्जं चपलयन्, मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन् । ……रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ।। इत्यादि ।

महाकविमाघेनाऽपि लिखितम्—

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः ।।

वसन्ते सौन्दर्यस्याभिनवं साम्राज्यं समुल्लसति । वसन्ते खगकुलं दिशि दिशि धावति, कूजति नृत्यति च। चतुरो मधुकरनिकर इतस्ततः अविरामं गुञ्जति । सहकारपादपाः मञ्जरीभिः शोभन्ते । पलाशे रक्तपुष्पाणि विकसन्ति । तरुषु कोमलानि किसलयानि विकसितानि पुष्पाणि च दृष्ट्वा मनः प्रसीदति । आम्रवृक्षेषु सञ्जाता मञ्जरीः दृष्ट्वा पिका हर्षातिरेकेण कूजन्ति गायन्ति च । भ्रमराः पुष्पाणि विलोक्य इतस्ततो भ्रमन्ति । कृषकाः नवसस्यानि दृष्ट्वा प्रसन्नाः भवन्ति । अर्याणां मुख्योत्सवः वसन्तोऽस्ति । अयमुत्सवः माघमासस्य शुक्लपक्षस्य पञ्चमीतः प्रारभ्यते । अस्मिन् दिने जनाः शारदां पूज्यन्ति । बहवः जनाः पीतवस्त्राणि धारयन्ति । अस्मिन् ऋतौ होलिकोत्सवः सम्पद्यते । अनन्तरं नवरात्रे समागते जनाः भगवतीं दुर्गां पूजयन्ति । वसन्ते भ्रमणेन स्वास्थ्यलाभो भवति । उक्तं च 'वसन्ते भ्रमणं पथ्यम् ।' अयं वसन्तकालः सर्वश्रेष्ठः, अत एव अस्माभिः वृथा न यापनीयः ।

## ( २१ ) सन्मित्रम्

कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी ।अविचार्य प्रियं कुर्यात् तन्मित्रं मित्रमुच्यते ।।

उक्तश्लोके संक्षेपेण सन्मित्रस्य लक्षणानि निरूपितानि सन्ति । सुखे, दुःखे, सम्पत्तौ च यः कस्यामप्यवस्थायां स्वमित्रं न त्यजति, स एव सन्मित्रमस्ति । उक्तं च—

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः।।

इह जगति सन्मित्रप्राप्तिः सुदुर्लभा । यः सुहृदो दुःखेन स्वयं दुःखी भवति, सः सुहृत् । उक्तं च—

सुखिते सुखी सुहृदि यः दुःखिनि दुःखी स च बन्धुर्भवति ।
उदिते मुदितः सिन्धुः शशिन्यस्तमयति सुक्षीणः ॥

विपत्समये ये पलायन्ते, समृद्धिसमये च सन्निहिता भवन्तीदृशाः सुहृदो बाहुल्येन भवन्ति, सम्पत्तौ विपत्तौ च सहायभूताः सुहृदस्तु विरला एव । मित्रमापत्सु जानीयात् । सत्यमुक्तम्—

मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः
पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद् दुर्लभम् ।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुला-
स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥

दुग्धसम्भृतं विषपूर्णं घटमिव दुग्धवन्मधुरभाषिणं परोक्षे च कार्यहन्तारं मित्रं वर्जयेत् । मित्रस्य लक्षणानि परीक्ष्यैव मित्राणि कर्तव्यानि । येन केनचित् मैत्री नोचिता । तथाहि—

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् । वर्जयेत् तादृशं मित्रं विषकुम्भं पयोमुखम् ॥

अपि च—

औरसं कृतसम्बन्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥

सन्मित्रम् पापान्निवारयति, हिताय योजयते, गुह्यानि गूहति, गुणान् प्रकटीकरोति, काले ददाति, आपद्गतं च जहाति न । संसारस्य अमूल्यं रत्नं मित्रमस्ति । मित्रप्रशंसायां सत्यमेवोक्तम्—

शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥

## ( ३२ ) वाराणसी ( काशी )

उत्क्षिप्य बाहू असकृद् ब्रवीमि त्रयीमयेऽस्मिस्त्रयमेय सारम् ।
विश्वेशलिङ्गं मणिकर्णिकाम्बु काशीपुरी सत्यमिदं त्रिसत्यम् ॥

आद्यशङ्कराचार्याः

प्रायः असी-वरुणयोर्मध्ये स्थित्या अस्य नगरस्य नाम 'वाराणसी' अभूत् । इयमेव 'काश्यते = प्रकाश्यते इति काशी' ति नामान्तरेण संस्तूयते लोकैः ।

सकलभुवनललामभूतेयं पुरी न केवलं भूतले एव अपितु लोकत्रयेऽपि पवित्रतातिरेकसम्पादिकेति प्रथितकीर्तिः । भगवतः चन्द्रमौलेस्त्रिशूलोपरि विराजमाना

मुक्तिप्रदायिनीति प्रथितयशोऽवदाना सकलतीर्थानाम् एकम् आयसनं, विद्याश्रियो-
र्मातृसदनं, भवनं वैभवस्य, आस्पदं साधुतायाः, कुलभवनं तपस्यायाः, आकरो
ज्ञानस्य, निधानं वैचित्र्यस्य कस्य वा न विदिता सचेतसः ।

इयमेव हि पुरा कृतयुगे राजर्षेर्दिवोदासस्य राजधानीत्वम् आसेदुषो सौभाग्य-
सम्पत्समृद्धिभिः दिवौकसामपि स्पृहणीया बभूव । भगवती भागीरथी च पापिनः
समुद्धर्तुंकामा गङ्गाधरस्य कपर्दबन्धाद् निष्क्रम्य अस्याः पादमूलं क्षालयन्ती
शान्तात्मनाऽत्र प्रवहति । अस्यास्तटे अनेकानेकमहीपालसुयशःस्वरूपाः पाषाणनिर्मिताः
शताधिका घट्टाः सकलभूतविलक्षणसुषमाः अनन्यसामान्या एव । सत्यमूर्तिः चक्र-
वर्तिमहाराजहरिश्चन्द्रोऽपि विश्वामित्रेण राज्यमपहृत्य निर्वासितः सन् चाण्डालराजे
आत्मानं विक्रीय तदनुचरो भवन् अत्रैव भागीरथीतटे प्रभोरर्थे प्रेतवस्त्राणि सञ्चि-
न्वन् अराजत । अष्टादशपुराणानां निर्माता कृष्णद्वैपायनो व्यासोऽपि अत्रैव वासं
कल्पितवान् । अत्रैव च भगवता धन्वन्तरिणाऽपि आयुर्वेदविद्यासम्प्रदायः प्रवर्तितः ।
'कुट्टनीमते' दामोदरगुप्तेन बौद्धजातकेषु वर्णितायाः काश्याः निकट एव सम्प्रति
'सारनाथ' नाम्ना प्रसिद्धं स्थानमस्ति । सनातनधर्मस्य मातृगृहभूताप्यसौ बौद्धजैना-
दिधर्माणामपि प्रसारलीलाभूमिर्बभूव । शङ्करावतारो भगवान् शङ्कराचार्योऽपि
अत्रैव तत्त्वज्ञानमवाप्तवान् । वल्लभाचार्य चैतन्यमहाप्रभुप्रभृतयोऽपि अत्रैव निव-
सन्तः स्व-स्वधर्मम् उपदिदिशुः । प्रायः सर्वेष्वेव शास्त्रेषु तत्तच्छास्त्रीयनिबन्धनि-
र्मातारः अपि इमां पुरीं समलञ्चक्रिरे । सन्ततुलसीकबीर–तैलङ्ग–स्वामि–भास्करा-
नन्द–विशुद्धानन्द–दयानन्दादयः सिद्धपुरुषाः अपि इहैव निवासं भेजिरे ।

अत्रत्यौ सम्पूर्णानन्दसंस्कृतविश्वविद्यालय-काशीहिन्दूविश्वविद्यालयौ प्रतिवर्षम्
असंख्यान् विदुषः लब्धप्रतिष्ठान् वितन्वन्तौ सरस्वतीम् अविरतं निषेवेते । अत्रैव
काशीविद्यापीठमपि राष्ट्रियशिक्षाप्रचारैकलक्ष्यं सुलक्षणं संलक्ष्यते । महाविद्यालयानां
विद्यालयानां च संख्या शतचतुष्टयादप्युपरि गच्छन्ती विद्यासमृद्धिं द्योतयति ।
भारतमातुः मन्दिरम् अतीव रमणीयं चात्र वर्तते । वर्तमानेऽपि समये आनन्द-
मयीमां-स्वामिकरपात्रिजी-म० म० श्रीगोपीनाथकविराज-पण्डितराजराजेश्वरशास्त्रि-
प्रभृतयो महामनीषिब्रह्मर्षयः अत्रैव विराजन्ते । एवंभूतायाः अस्याः प्रत्यङ्गमनेके
विशेषाः सविशेषं लक्ष्यन्ते तेषां वर्णनं केन वा साकल्येन वर्णयितुं शक्यत इति ।

## ( २३ ) काश्मीर

प्रदेशोऽयं भुवि स्वर्गस्य खण्डः देश-विदेशेषु प्रसिद्धोऽस्ति। भारतस्य पश्चिमोत्तरस्यां दिशि सीमान्तभूतोऽयं प्रदेशः व्यवस्थितो वर्तते। अत्रत्यौ जलवायू स्वास्थ्यकरौ स्तः। अत्र गत्वा तयोः प्रभावेण रोगिणोऽपि नीरोगाः भवन्ति। वनेषु उपवनेषु च सदैव शीतो मन्दः गन्धयुतश्च पवनो वाति, यः खलु स्पर्शमात्रेण मनुष्याणां मनांसि सुखयति। पानीयमपि मधुरं सुस्वादु शीतलं चास्ति। अत्र प्रदेशे प्रकृतेश्च सुषमा परमरमणीया वर्तते। वन्या बहुविधाः वृक्षाः लताश्च भारतस्यास्य प्रदेशस्य सर्वतः शोभां वर्धयन्ति। अत्र च बहुविधानि मधुराणि पुष्टिकराणि फलानि उत्पद्यन्ते। केसरमपि भारते कश्मीरे एव बहुलतया जायते। द्राक्षाः मृद्वीकाः 'वेदाना' नामका दाडिमाः अक्षोटाः सेवाश्च अत्र प्रचुरतया समुद्भवन्ति। विविधवर्णा- चित्र-विचित्राः पक्षिणः पतङ्गाश्च भवन्ति मुखरयन्ति च द्रुमकुञ्जानि स्वकूजनैः।

अत्र प्रदेशे अनेकाः रमणीयाः नद्यः सन्ति। तासु वितस्ता नाम नदी प्रभूतजलवती वर्तते। अन्यानि चापि बहूनि तीर्थस्थानानि अत्र सन्ति। तेषु अमरनाथनामा महादेवः परमप्रसिद्धोऽस्ति। इदं स्थानं हिमसंहतिमध्ये विद्यते। एकस्यां च गुहायां हैमं शिवलिङ्गं विद्यते। श्रावणपूर्णिमायां तत्र मेला भवति।

अनन्तनागनामकात् नगरात् श्रीनगरं यावत् वितस्तायां नौमार्गो विद्यते। नावा एव जनाः गमनागमनं कुर्वन्ति। इमाश्च नावः वस्तुतो नौकागृहाणि एव सन्ति। तत्र च शयनस्थानानि स्नानगृहाणि गोष्ठीभवनानि च पृथक् पृथक् निर्मितानि भवन्ति। बहवो भारतीया विदेशीयाश्च एषु नौभवनेषु वसन्तः बहून् कालान् यापयन्ति।

श्रीनगरस्य नातिदूरे 'डल' नामकः एको महाकासारो वर्तते। तत्र विशालकाष्ठफलकेषु हस्तमात्रोच्छ्रितां मृदम् आस्तीर्य शाकबीजानि तत्र जना वपन्ति। तेषु च शाकानि वृन्ताकादिफलानि च भवन्ति। अस्मिन् एव प्रदेशे पुरा अभिनवगुप्त-कैयट-मम्मट-क्षेमेन्द्र-कल्हण-प्रभृतयो बहवः महाकवयः विद्वांसश्च आविरभूवन्। वस्तुतः पृथिव्याः स्वर्गोऽयं सुरभारतीमुकुटः काश्मीरः भारतस्य भूभागः।

## ( २४ ) धनम्

### ( धनाद् धर्मं ततः सुखम्। सर्वे गुणाः काञ्चनमाश्रयन्ति )

इह जगति सर्वे जनाः सुखमिच्छन्ति। सुखकारणं धनमेवास्ति। अतः संसारे धनमेव सर्वश्रेष्ठं वस्तु अस्ति। धनेन विना कार्याणि न सिध्यन्ति, जीविकानिर्वाहश्च कथमपि न भवति। धनं विना किमपि कार्यं न सरति। धनं विना विद्योपार्जनं कर्तुं न शक्यते, न्यायोऽपि न भवितुं शक्नोति। धनं विना नरः उत्सवेषु कर्तुं न शक्यते, न्यायालये न्यायोऽपि न भवितुं शक्नोति। धनं विना नरः उत्सवेषु सावज्ञमालोक्यते। धनं विना सर्वमपि वस्तु नीरसं प्रतिभाति। उक्तं च—

बुभुक्षितैर्व्याकरणं न भुज्यते, पिपासितैः काव्यरसो न पीयते।
न विद्यया केनचिदुद्धृतं कुलं, हिरण्यमेवार्जय निष्फला गुणाः॥

धनैः अकुलीना कुलीना भवन्ति। संसारे समस्तगुणाः धनमेवाश्रयन्ति। उक्तं च—

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमांल्लोके यस्यार्थाः स हि पण्डितः॥

यस्य पार्श्वे धनं नास्ति तस्य कश्चिदपि अभिलाषो न पूर्तिमेति। धनैः मानवाः शोकसागरं तरन्ति। निर्धनता समस्तापदां गृहमस्ति। अल्पक्लेशं मरणं दारिद्र्य-मनन्तकं दुःखम्। नष्टधनाश्रयस्य न कोऽपि मित्रं भवति। धनहीनस्य सौहृदादपि जनाः शिथिलीभवन्ति। तस्य स्वकीयोपि परकीयः भवति। धनेन विना शील-शशिनः कान्तिः परिम्लायते, सुस्निग्धाश्च विमुखीभवन्ति। धनेन विना बान्धवः वाक्ये न विश्वसिति। धनहीनस्य जनस्य जीवनं व्यर्थमिव प्रतिभाति धनं विना वनं गन्तुं बुद्धिर्भवति, कलत्रादपि परिभवः भवति।

प्राचीनैः मुनिभिरपि धनस्यावश्यकता उपयोगिता च स्वीकृता। चतुर्वर्गफल-प्राप्तिरपि धनेनैव संभवति। धनेनैव धर्मोऽपि प्रसरति। अतः सर्वैः सद्धनोपार्जनं कर्त्तव्यम्। सद्धनोपार्जनेनैव मानवाः सुखिनो भवन्ति तदुक्तम्—

विद्या ददाति विनयं विनयाद् याति पात्रताम्।
पात्रत्वाद् धनमाप्नोति धनाद् धर्मं ततः सुखम्॥

## ( २५ ) सत्यम् ( 'सत्यमेव जायते नानृतम्' )

'अद्भिर्गात्राणि शुद्धयन्ति मनः सत्येन शुद्धयति ।' ( मनुः ) यद् वस्तु यथा वर्तते तस्य तथैव कथनं लेखनं प्रकाशनं वा सत्यमित्युच्यते । अस्मिन् भारतवर्षे विविधधर्मसम्प्रदायाः सन्ति । तेषां विभिन्नानि मतानि सन्ति, परं सत्ये सर्वेषामैकमत्यस्ति । सर्वाणि शास्त्राणि एकस्वरेण सत्यस्य महिमानं गायन्ति । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतौ ब्रह्मणः स्वरूपं सत्यमिति प्रतिपादितम् । तैत्तिरीयोपनिषत् कथयति यत् सत्यान्न प्रमदितव्यम् ।

त्रिषु लोकेषु नहि सत्यात् परो धर्मः । मिथ्या पापमस्ति अतः सत्यं ब्रूयात् । सत्यं सर्वश्रेष्ठम् तपः अस्ति । अत एवोक्तम्—'नहि सत्यात् परो धर्मस्त्रिषु लोकेषु विद्यते । पापं मिथ्यासमं नास्ति तस्मात् सत्यं सदा वद ।' यः सत्यं वदति सः निर्भीको भवति । सत्यव्रती पापकर्मसु न प्रवर्तते । सत्यवादिनः पुरुषाः समाजे आदरं प्राप्नुवन्ति । मिथ्यावादिनः पुरुषाः कुत्रापि न पूज्यन्ते । सत्यवादिनः कीर्तिः दिक्षु प्रसरति । समाजस्य लोकस्य च मिथ्याभाषणेन विनाशः भवति । सत्यभाषणेन विद्या गौरवं च वर्धते । सत्यमेव लोकस्याधारोऽस्ति । अत एवाच्यते—'सत्येन धार्यते पृथ्वी सत्येन तपते रविः । सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् ।' सत्यवचनात् नरस्य कल्याणं भवति । यथा ऊषरे बीजवपनं व्यर्थमस्ति तथैव सत्यहीना पूजापि वृथा अस्ति । तथाहि—'सत्यहीना वृथा पूजा सत्यहीनो जपो वृथा । सत्यहीनन्तपो व्यर्थमूषरे वपनं यथा ॥' सत्यस्य महिमानं देवाः अपि गायन्ति । सत्यवादी हरिश्चन्द्रः सत्यार्थं स्वकीयां धर्मपत्नीमपि विक्रीय सत्यमपालयत् । जाबालोऽपि सत्यवचनात् ब्रह्मज्ञानी अभवत् । सत्यस्य पालनार्थमेव महाराजो दशरथः प्रियं पुत्रं रामं महावनं प्रेषयामास । युधिष्ठिरः सत्यप्रभावेणैव विजयं लेभे । सत्यस्य प्रतिष्ठयैव लोककल्याणस्य सम्भवः । अतः सर्वैरपि सदा सत्यमेव भाषणीयम् ।

## ( २६ ) अहिंसा

### ( अहिंसा परमो धर्मः )

अहिंसा त्रिविधा भवति ( १ ) जनः यदि कस्यचित् मानवस्य अनिष्टं न चिन्तयति, सा मानसिकी अहिंसा, ( २ ) यदि कटुभाषणेन अमृतवचनेन वा

कमपि दुःखितं न करोति, अपितु मधुरालापेन सुखं ददाति सा वाचिकी अहिंसा भवति, ( ३ ) यदि जनः कस्यापि जीवस्य हननं न करोति, प्रहारादिना दुःखं न ददाति तर्हि सा कायिकी अहिंसा भवति। वेदेषु अहिंसायाः महत्त्वं बहुवर्णितमस्ति। मनुना निर्दिष्टेषु दशलाक्षणिकधर्मेषु आद्यः धर्मः अहिंसा एव अस्ति।

अहिंसाधर्मपालकाः कारुणिकाः दयान्तश्च भवन्ति। मानवस्य आत्मा अहिंसयैव सुखमनुभवति, मनः सदैव प्रसन्नं तिष्ठति। अहिंसया रिपवोऽपि मित्राणि भवन्ति। अहिंसापालनेन उत्तमं कार्यं कर्तुं शक्नुवन्ति। सर्वाणि कार्याणि अहिंसाव्रतेनैव सरलतया सिद्धयन्ति। अत एव मुनिभिः महर्षिभिश्च 'अहिंसा परमो धर्मः' इति स्वीकृतः।

अस्माकं देशे अहिंसायाः अतीव महत्त्वपूर्णं स्थानमस्ति। बौद्धाः जैनाश्च कस्यचिदपि जीवस्य हिंसायै न आदिशन्ति। भगवान् बुद्धः महावीरश्च अहिंसायाः प्रचारं सर्वत्रैव चक्रतुः। भगवान् बोधिसत्त्वः, अशोकः, महात्मा गान्धिमहोदयश्च अहिंसाधर्मस्य पालनेनैव सर्वेषां मनुष्याणां पूजापात्रमभवन्। अधुनापि ते यशःशरीरेण जीवन्ति। न केवलं धार्मिकक्षेत्रे अहिंसाधर्मस्य पालनं हितकरमपि तु राजनीतिकक्षेत्रेऽपि अहिंसाधर्मस्य पालनं हितकरम्। एषः अहिंसाया एव महिमा अस्ति यत् अधुना भारतवर्षः पराधीनतापाशं छित्वा स्वतन्त्रोऽस्ति।

हिंसाकरणं महत्पापं वर्तते। हिंसया मानवः क्रूरः भवति। कस्यचिदपि हिंसनम् ईश्वरद्रोहोऽस्ति। हिंसया ईश्वरः मानवाय क्रुध्यति। अत एव सर्वैरपि अहिंसाधर्मः पालनीयः।

## ( २७ ) सदाचारः

### आचारः परमो धर्मः

तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥ ( मनुः २।१८ )

सतां सत्पुरुषाणाम् आचारः सदाचार इति कथ्यते। सदाचारयुक्तः जनः स्वकीयानि इन्द्रियाणि वशीकृत्य सर्वैः सह शिष्टतापूर्वकमाचारमाचरति। सः सत्यं वदति, मातापितरौ उत्थाय नित्यमेवाभिवादयते, गुरुजनानामादरं करोति, नित्यमग्निं परिचरति, परोपकारं च करोति। मानवः तद्वद् आचरणेन सदाचारी, धार्मिकः विनीतश्च भवति।

सदाचारयुक्तः जनः सर्वत्र आदरं लभते। समस्तगुणयुक्तोऽपि सदाचाररहितः जनः समाजे आदरं न लभते। सदाचारेण बुद्धिः वर्धते, कीर्तिः दिक्षु प्रसरति दुर्गुणोऽपि दूरीभवति, कुविचाराणां प्रादुर्भावो न भवति, हृदये सद्भावः जागर्ति, आयुश्च वर्धते। सदाचारेणैव जना ब्रह्मचारिणो भवन्ति। सदाचारः मानवमुच्चपदे स्थापयन्ति। सदाचारयुक्तस्य जनस्य पापकर्मणि प्रवृत्तिर्न अत एव तस्य बुद्धिर्निर्दोषा भवति। निर्दोषबुद्धिश्च लोकस्य शुभचिन्तने प्रवृत्तो भवति। अत एव पूर्वैः महर्षिभिः 'आचारः परमो धर्मः' इत्यङ्गीकृतः। सदाचारः विश्वस्य प्रतिष्ठा सदाचारे सर्वं प्रतिष्ठितम्। तस्मात् सदाचारं परमं धर्मं वदन्ति। अत एव जनैः सदा स्ववृत्तस्य रक्षा कार्या। सदाचारेण हीनः जनः पतित' पशुतुल्यश्चास्ति।

सदाचारस्य महिमानं कोऽपि वर्णयितुम् न शक्नोति। समस्तधर्मग्रन्थेषु सदाचारस्य महिमा विभिन्नप्रकारैः वर्णितोऽस्ति। तथाहि—

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः।
आचाराद् धनमक्षय्यमाचारो हन्त्यलक्षणम्॥
आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः।
साधूनाञ्च यथावृत्तमेतदाचार-लक्षणम्॥

अत एव वयं सदाचारिणः भवेम। सच्चरित्र मातृवत् परदारेषु व्यवहारं करोति, कन्यां बालिकाञ्च स्वभगिनीवत् पश्यति, परद्रव्याणि लोष्टवत् पश्यति। सदाचारेणैव लोकस्य उन्नतिर्भवति। सदाचारपालनेनैव हरिश्चन्द्रः, दधीचिः, गान्धीमहोदयश्च यशःशरीरेण अद्यापि जीवन्ति। अतः समस्तैः मानवैः सदाचारः पालनीयः।

## ( २८ ) विज्ञानम्

## वैज्ञानिकाः, आविष्काराश्च

आवश्यकता आविष्काराणां जननी भवति। इदं युगं विज्ञान-प्रधानं नास्त्यत्र कोऽपि सन्देहः। वैज्ञानिकैः आविष्कारैः जगतो महानुपकारो जातः। वैज्ञानिकेन मानवेन लोकहितार्थं प्राकृतिकशक्तीनां वशीकरणे यत्साफल्यं प्राप्तं तत् न विस्मर्तुं शक्यते।

प्राचीनकाले वाहनानि अश्वरथः, गजः, घोटकश्च आसन्। श्रेष्ठिनो, महाजनाः,

धनिकाश्च पुष्परथैः, शकटैः शकटीभिश्च चलन्ति स्म। सामान्यजनास्तु पद्भ्यामेव जग्मुः। साम्प्रतं तु नानाविधान्यद्भूतयानानि वैज्ञानिकैः निर्मितानि सन्ति। धूमयानेन स्थले वयं वेगेन गच्छामः। धूमयानेन अस्माकं दूरयात्रायां जायमान-मसौख्यमपि दूरीकृतम्। वयं पोतेन समुद्रांश्च तरामः, वायुयानेन च आकाशेऽपि स्वच्छन्दं विचरामः। परं विमानानां, समुद्रपोतानां जलान्तर्गामिनीनां नौकानाम् चाविष्कारेण युद्धं नितरां जातम्।

अद्य चित्रपटस्य समाजे यादृशः प्रभावः न तादृशोऽन्यस्य कस्यापि वस्तुनः। सम्प्रति चित्रपटस्य महान् प्रचारोऽस्ति। एवं किमपि नगरं नास्ति यत्र चित्रपट-भवनं न भवेत्। अद्य मुद्रणयन्त्र-प्रभावेण अतिदुर्लभमपि ग्रन्थरत्नमल्पमूल्येन लब्धुं शक्यते। समाचारपत्राणि अधुना गेहे गेहे पठ्यन्ते। समाचारपत्रेण संसारस्य महान् उपकारः भवति। अनेनैव सर्वं स्थानं निकटे स्थितमिव वर्तते। 'रेडियो' इत्याख्येन ध्वनिप्रसारकयन्त्रेण पर्वतानां सागराणां गहनानां वनानां च व्यवधानम् अविगणय्य जनः उच्चारणसमकालमेव सहस्रक्रोशेभ्योऽपि वृत्तं गीतादिकं च शृणोति। 'टेलीविजन' इति नाम्ना प्रसिद्धेन यन्त्रेण दविष्ठस्यापि जनस्य आकृति-रपि दृष्टिपथमायाति। अहो विज्ञानस्य विस्मयावहः महिमा। कृषियन्त्राणामा-विष्कारेण इह विज्ञानप्रधाने युगे उत्पादनकर्मणि महती प्रगतिः दृश्यते। अधुना प्रत्येकं कार्यं विद्युच्छक्तिप्रयोगेण सरलतया सुष्ठुतया च सम्पादयितुं शक्यते। दूरवीक्षणयन्त्राणाम् आविष्कारेण सूक्ष्मतरा अपि कीटाणवः द्रष्टुं शक्यन्ते। प्रचण्डेऽपि निदाघे ग्रीष्मभयमथवा कठिनेऽपि शीते शीतभयम् इदानीं नास्ति। वयम् उभयोः अपि कालयोः विद्युद्व्यजनसाहाय्येन विद्युच्चल्लितप्रयोगेण वा सुखपूर्वकं शेमहे। सर्वमेतद् अन्यच्च वा सुखं वैज्ञानिकानां महतः श्रमस्य परिणामः। परमतीव खेदस्यायं विषयो यदियं विज्ञानस्योन्नतिः जनानां विध्वंसा-त्मकप्रवृत्त्या। अतः विध्वंसात्मकं विज्ञानं परित्यज्य रचनात्मकविज्ञानमङ्गीकृत्य जनाः सुखं लभेरन्।

## ( २९ ) श्रीमद्भगवद्गीता

'गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः'

महाभारतस्य युद्धक्षेत्रे संशयालुमर्जुनं दृष्ट्वा तस्य कर्तव्यपालनार्थं भगवता

कृष्णेन य उपदेशो दत्तः स एव 'श्रीमद्भगवद्गीता' इति नाम्ना प्रसिद्धोऽस्ति। सञ्जयेन (व्यासेन) अनूदिता ये कृष्णोपदेशा गीतायां सन्ति, सर्वेषां तेषां मुख्या एते सन्ति—

(१) अयमात्मा अजरः, अमरः, नित्यः, शाश्वतः, पुराणश्च। शरीरे हन्यमाने अयमात्मा न हन्यते।

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥

(२) मर्त्यः स्वकर्मानुसारमेव म्रियते पुनर्जन्म च प्राप्नोति। अत एवास्मिन् विषये शोको न कर्त्तव्यः।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥

(३) इदं जगत् कर्मक्षेत्रमस्ति। पौरुषमस्माकमधीनम्, फलं तु दैवाधीनम्। फलाशां परित्यज्य कर्माणि कर्तव्यानि।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥

(४) मनुष्यैः स्वधर्मो न त्याज्यः। सदा स्वकर्म पालनीयम्।

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।

(५) मरणं वरमस्ति परन्तु कीर्तिनाशः न, अतः जनैः कीर्तिरक्षा करणीया।

सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते।

(६) शुभाशुभकर्मणः नाशो न भवति।

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।

गीताया उपदेशः जनानाम् अखिलमलप्रक्षालनक्षमम् अजलं स्नानम्। अस्मिन्नेकस्मिन् ग्रन्थे मानवजीवने साफल्यजुषां जनानाममोघाः सर्वेऽपि विषयाः समुपलभ्यन्ते। अतो गीतायाः पठनं पाठनञ्च कार्यम्।

## ( ३० ) एकता

### ( संघे शक्तिः कलौ युगे )

एकमुद्देश्यं लक्ष्यीकृत्य बहूनां जनानाम् एकत्वभावनया कार्यकरणम् 'एकता' इति कथ्यते। एकतया मानवो बलवान् भवति। एकतयैव समाजः, राष्ट्रं, लोकश्च उन्नतिपथमधिरोहति। अद्यत्वे संसारे एकतायाः अतीवावश्यकता वर्तते। यस्मिन् राष्ट्रे एकताया अभावोऽस्ति, तद् राष्ट्रं परतन्त्रतापाशबद्धं भवति। अस्माकं देशोऽपि एकताया अभावात् कतिपयवर्षपूर्वं यावत् पारतन्त्र्यपाशबद्ध आसीत्। परं यदा भारतीयेषु एकताभावनाया जागर्तिरभूत्, तदा ते स्वातन्त्र्यमलभन्त। अत एवोच्यते 'संघे शक्तिः कलौ युगे'।

ऋग्वेदस्यान्तिमे सूक्ते एकताया आवश्यकता महत्त्वं च प्रतिपादितमस्ति। सर्वे मानवा एकत्वभावनया युक्ताः स्युः। तेषां गमनं, विचाराः, मनांसि, भाषणं, सङ्कल्पाश्चैकत्वभावेनैव प्रेरितानि स्युः। इत्थं संसारे सुखस्य शान्तेश्च प्राप्तिः संभवति। तथा हि—

संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्॥ १॥
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि॥ २॥
समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति॥ ३॥

एकताया अद्भुत एव प्रभावः। हितोपदेशे मित्रलाभप्रकरणे एकतायाः लाभाः प्रतिपादिताः सन्ति। क्षुद्राणि तृणानि यदा रज्जुरूपं धारयन्ति, तदा गजोऽपि तेन बध्यते। जलबिन्दुसमूहेन नदी सागरश्च भवति। मृत्तिकाकणसमूह एव पर्वतो भवति। तन्तुसमूहेन पटो जायते। अत एवोक्तम्–'संहतिः श्रेयसी पुंसाम्'।

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः॥

यत्रैकताया अभावो वर्तते तत्र क्षयो नाशो हानिश्च दृश्यन्ते। अतः सुखसमृद्धिप्राप्त्यै एकता धारणीया। उक्तं चापि महाभारते—

न वै भिन्ना जातु चरन्ति धर्मं, न वै सुखं प्राप्नुवन्तीह भिन्नाः।
न वै भिन्ना गौरवं प्राप्नुवन्ति, न वै भिन्नाः प्रशमं रोचयन्ति॥

## ( ३१ ) व्यापारः

एकस्य स्थानस्य देशस्य वा वस्तु स्थानान्तरे देशान्तरे च उपयोगार्थं क्रीत्वा यन्नीयते स व्यापारः। एवमेव स्वयमुत्पादितस्य क्रीतस्य वा वस्तुनः परकीयं धनमादाय विक्रयोऽपि व्यापारः। तथा एकतः स्थानाद् आनयनम्–'आयातम्', निर्गमनं च 'निर्यातम्' इति द्वयोर्मिलित्वा 'व्यापारः' इति समभिधीयते।

सम्प्रति कस्याऽपि देशस्य कार्यं व्यापारं विना चलत्येव नहि। यदि रूसदेशे मृत्तैलम् अधिकम् उत्पाद्यते, कार्पासं च नास्ति तदा तेन तैलं दत्त्वा कुतोऽपि देशात् कार्पासम् आसादनीयमेव। व्यापाराद् नानाऽऽकारको लाभो भवति। कस्याऽपि देशस्य सम्पत्तिः भौतिकी समुन्नतिश्च एकान्ततो व्यापारमेव आधारी-कुरुते। यदि वयं समृद्धेषु शक्तिशालिषु च अमरीका-ब्रिटेनप्रभृतिषु देशेषु दृष्टिं क्षिपामः, तदा स्फुटमिदं प्रत्येतुम् अवसरं लभेमहि यत् सर्वाऽपि समृद्धिः शक्तिश्चैषां व्यापारेणैव जनिता। ब्रिटिशजातीयाः पुरा व्यापारस्य कृते एव भारतं समायाताः। समागत्यात्र व्यापारम् उन्नयन्तस्ते तन्महिम्नैव नष्टशासनसूत्रस्य देशस्यास्य शासकाः समजायन्त।

न केवलं समृद्धिरेव एधते व्यापारेण, परं सभ्यतायाः अपि विकासे व्यापारेण साहाय्यम् आचर्यते। यस्य देशस्य येन देशान्तरेण व्यापार-सम्पर्को भवति तयोः परस्परं प्रवृत्तेन यातायातेन विचारस्य व्यवहारस्य च आदानप्रदानयोर्जातयोः सभ्यता समेधते।

व्यापारेण 'वृत्तिराहित्यम्' दूरीक्रियते। यस्य देशस्य व्यापारः समृद्धः स स्वीयं वस्तु प्रचुरया मात्रया परदेशेषु प्रेषयितुमिच्छति। प्रचुरवस्तुनिर्माणार्थं प्रचुरस्य जनसमूहस्य नियुक्तिरपेक्ष्यते। येन व्यर्थंजीवनानामपि जनानां समयः सार्थकतां भजते। अन्येषु क्षेत्रेषु इव अत्र क्षेत्रे वृत्तिसाङ्कर्यं वृत्तिकार्कश्यं वा न भवति। यथा यथा व्यापाराः वर्धन्ते, देशः समृद्धयति व्यापारान्तराणि च प्रसूयन्ते। अतः सर्वैः आत्मनोन्नतये व्यापारः समेधनीय इति।

## ( ३२ ) धूमशकट-( रेल )-यात्रा

एकदाऽहं धूमशकटेन वाराणसेयसंस्कृतविश्वविद्यालयस्य कतिपयैः सतीर्थ्यैः साकं नैनीतालमभिधानं रमणीयपर्वतीयप्रदेशं गन्तुं कृतनिश्चयः वाराणसीकैण्टनामकं

धूमशकटस्थितिस्थानमागत्य तदागमनं प्रतीक्षमाणोऽतिष्ठम् । यथासमयसमागते शकटे तदागमनजनितध्वनिना आरोहदवरोहल्लोकककलहकलकलेन तत्तद्वस्तुविक्रेतृजनकोलाहलशब्देन भारवाहकजनधावनादिना च तत्स्थानं सम्भ्रान्तमिव अजायत । तस्मिन्नेव सम्भ्रमेऽहमपि त्वरया कमप्येकं द्वितीयश्रेणीस्थानमासाद्य वस्तूनि यथास्थानं विन्यस्य भारवाहकाय यथार्थितं पारश्रमिकं प्रदाय च स्वस्थः सञ्जातः ।

विंशतिकलाः विलम्ब्य चलिते शकटे बाह्यदृश्यानि चलितानीव अथ च पार्श्वस्थिताः वृक्षाः भवनानि मनुष्याः वनस्पतयः स्तम्भादयश्च पृष्ठतः धावमानाः इव प्रतीयन्ते स्म । दूरस्थितानि वस्तूनि क्षणे पार्श्वं समायान्ति, तथैव पार्श्वे स्थितानि वेगेन दूरं प्रयान्ति । अतिदूरस्थं दृश्यं क्षितिजकूले स्थितमिव दृश्यते । इत्थं धूमशकटयात्रा विचित्रा । विस्मयकरी मनोरञ्जिका च भवति । तदसौ यात्रावृत्तान्तः सम्प्रत्यपि स्मर्यमाणो मनः पुलकयति, तत्र सङ्गिनां स्मरणेन कमपि मानसोद्रेकं जनयति, कालव्यवधानं तिरोधाय च मां तत्र तदवस्थमेव ज्ञानदृष्टौ विधत्त इति ।

## ( ३३ ) नौकाविहारः

एकदाऽहं चौखम्बासंस्कृतपुस्तकालयाध्यक्षस्यानुरोधेन तैः सपरिवारैः सह काश्यां दशाश्वमेधघट्टकादेकां नौकामारुह्य नौकाविहाराय गङ्गायां प्रचलितः । यदा नौः किञ्चिदग्रे अगच्छत् तदा तेषु तेषु दशाश्वमेधादिनाम्ना प्रसिद्धेषु घट्टेषु दृष्टिः पतिता, यत्र केचित् स्नानमाचरन्ति, केचित् पूजां कुर्वन्ति, कुत्रचिद् बद्धसङ्घाः स्त्रियो भक्तिगीतानि गायन्ति, क्वचिद् विद्यार्थिनिवहः अध्यापकानाम् अध्यापनपद्धतिम् आलोचयति, क्वचन साधवो निमीलिताक्षाः ध्यायन्ति शाश्वतं पुरुषं प्रमाणम् ।

कियद् दूरम् अपसृतायां नावि जातायां सन्ध्यायाम् अवतीर्णे भगवति भास्करे पश्चिमोदधिम्, क्रमशः प्रकाशीभवत्सु नक्षत्रेषु, तटभूमयः सकृदेव प्रज्वलितविद्युत्प्रदीपाः सत्यस्तथा प्रकाशिता जाता यथा व्यस्मार्यतेव भगवान् भास्करः । तस्मिन् समये सर्वत्र प्रसरन्ती विद्युत्प्रदीपप्रभा गङ्गाजले प्रतिफलन्ती गङ्गायै दीपमालामिव उपहरति स्म ।

तदेवं यदा अस्माकं नौस्तानि तानि घट्टानि अतिक्रम्य राजघट्टस्य समीपमासदत्

तदाऽस्माकं नयनानि मालवीयसेतोर्गङ्गावद्धस्थावलोकने तथा आसक्तानि बभूवुर्यथा परत्र जायमानानि वृत्तानि मनागपि नाध्यायन् । तत्र हि विशालसेतौ क्वचित् पूर्वतः पश्चिमां पश्चिमतः पूर्वाञ्च गच्छतां तेषां तेषां यानानां चाकचिक्यं चक्षूंषि बलादिव आहरति स्म ।

यथोत्तरं तद्दर्शनेच्छा प्रबलैवासीत् परं स्त्रीर्बालांश्च सहवर्तिनोऽन्धकारं च गहनीभूतमनुष्याय बलादिव नौका परावर्तिता, तथापि विपरीतप्रवाहवशात् रात्रौ नववादनवेलायां भगवतीभागीरथीप्रसादात् कुशलिनो वयं पुनरावासं प्राप्ता इति ।

## ( ३४ ) समाचारपत्राणि

यानि लघूनि बृहदाकाराणि वा पत्राणि नियतदिनाङ्केषु भिन्नभिन्नस्थानानां समाचारान् सङ्कलय्य सम्पाद्य च मुद्रितानि कृत्वा विक्रीयन्ते तानि समाचारपत्राणि कथ्यन्ते । एषु न केवलं समाचाराः एव अपितु समुत्कर्षसम्पादकाः विचाराः अपि प्रकाश्यन्ते ।

सर्वे सभ्याः साक्षराः पुरुषाः स्त्रियश्च स्वस्य नगरस्य प्रान्तस्य देशस्य विदेशानां च अवस्थां ज्ञातुं प्रतिदिनं नवीनां जायमानां सामाजिकीं च परिस्थितम् अवबोद्धुं सर्वदैव समुत्कण्ठिताः भवन्ति । तेषाम् औत्सुक्यस्य शमनाय मनसः सन्तोषणाय च समाचारपत्रमेव उपयोगि सुलभं च विद्यते साधनम् । अनेन स्वगृहे स्थिता एव पुरुषाः स्त्रियश्च स्वदेशस्य विदेशानां च अभिनवसमाचारान् अल्पव्ययेनैव ज्ञात्वा विश्वस्य मानवैः सह तेषां दुःखे समवेदनां, सुखे आनन्दानुभूतिं च प्रदर्श्य सुदृढसम्बन्धमिव स्थापयन्ति । प्रायः सद्भावनयै समाचारपत्राणाम् प्रथमः आविर्भावः आसीत् ।

सर्वप्रथमं समाचारपत्रम् इटलीदेशस्य वेनिसनगरे प्रकाशमासादयत् । तदुद्भवान् लाभान् दृष्ट्वा सर्वे देशाः समाचारपत्राणां प्रकाशनम् आरब्धवन्तः । १७४०तमे ईशवीये 'इण्डिया गजट' नामकस्य पत्रस्य भारते प्रथमं प्रकाशनं प्रावर्तत । इदं तु निश्चप्रचं यद् यो हि प्रत्यहं समाचारपत्राणि अधीते स विशदतां व्यवहारं विजानाति मेधावान् प्रबुद्धतरश्च भवतीति नात्र सन्देहलेश इति ।

## ( ३५ ) चलच्चित्रम् ( सिनेमा )

चित्रपटेषु लोकानां रुचिरुत्तरोत्तरं शतमुखीव प्रवर्धत इति प्रत्यक्षमेव । १८६० तमे ईशवीये यदा अमेरिकादेशे अभूदस्य प्रथमः आविष्कारः तदा विस्मितानां

लोकानां हृदये विश्वास एव नाऽभवद् यत्ते वास्तवम् एव चेष्टमानानि चित्राणि पश्यन्तीति। यदा तु तानि चित्राणि चेष्टाभिः सह संलापमप्यकुर्वन् तदा तु लोकानाम् आश्चर्यस्य परिसीमैव नाऽभवत्। परमिदं चित्राणां परस्परं संलाप-कौतुकमपि शनैः शनैः साधारणमिव अभवत्।

अद्यत्वे चलचित्रं न केवलं मनोरञ्जनसाधनम् अपितु अनेकधा समाजानां कृते उपयोगि संजातम्। मनोरञ्जनापेक्षया शिक्षायाः सदाचारस्य च प्रचाराय साधनं सम्भवेदेतत् चलचित्रम्। पाश्चात्यदेशेषु शिक्षायाः देशभक्तेः समाजोद्धारस्य च प्रचारार्थम् उपयुज्यन्ते चलचित्राणि। अस्माकं भारतवर्षेऽपि यदि इतिहासस्य भूगोलस्य विज्ञानस्य स्वदेशोत्थानस्य समाजोन्नतेः कृषिवाणिज्योद्धारस्य च प्रचाराय चलचित्राणाम् उपयोगः स्यात्तर्हि स्वदेशस्य महान् अभ्युदयः साधितो भवेत्। विदेशेषु आविष्कृतानां वैज्ञानिकानां कृषिसाधकानां स्वास्थ्यरक्षकाणां च उपायानाम् उपयोगः सुलभतया शिक्षयितुं शक्यः चलचित्राणां साहाय्येन। परन्तु देशस्य दुर्दैवेन यादृशं पतनं सम्पादितं भारतीयानां विशेषतः शिक्षार्थिनां चलचित्रेण, न तादृशो क्षतिः तादृशं पतनं च कृतं व्यसनान्तरशतैरपि। लोभग्रस्ताः चलचित्रव्यवस्थापकः स्वदेशवासिनां पूर्णतः विनाशं कृत्वाऽपि येन केनाऽपि विधिना तेषां धनापहरणमेव स्वकीयं लक्ष्यं निश्चित्य चरित्रहीनानां स्त्रीणां पुरुषाणां च परस्परम् अश्लीलान् दुराचारान् चित्रपटेषु प्रदर्श्य भाविनागरिकाणां मूलाच्छेदं कुर्वन्ति। अनेके छात्राः नागरिकाश्च अस्वस्थाः तस्कराः दुश्चरित्राश्च संजाताः चलचित्रस्याऽस्य कुप्रभावेण। अतः चलचित्रेण आमूलपरिवर्तनं विधेयं शासकैरिति।

## ( ३६ ) बौद्धधर्मः

'अहिंसा परमो धर्मः' इति बौद्धधर्मस्य आदर्शो मन्त्रः। बुद्धोपदिष्टाः नैतिक-सिद्धान्ताः सरलाः सुकराश्च सन्ति। वैदिकज्ञानां पशुवदानस्य स्थाने बुद्धावतारो भगवान् आत्मयज्ञं प्रचारयामास। तत्र स्रुवो वाणी, हृदयं च यज्ञवेदी। बौद्धधर्मः ईश्वरं प्रति उदासीनः। सत्कर्म, अहिंसा, दया चैव मनुष्यमात्रस्य वास्तविको धर्मः, मानवः स्वयमेव निजदैवस्य निर्माताऽस्ति, स सत्कर्मसु प्रवर्तमानः अन्ततो निर्वाणमधिगच्छतीति बौद्धा दृष्टिकोणः। अस्य धर्मस्य लोकप्रियतायाः कारणम् उपदेशवचनानां सारल्यमेवास्ति। बौद्धधर्मे जातिभेदो वर्गभेदो लिङ्गभेदश्च न

सन्ति। वर्णाश्रमव्यवस्थामपि बौद्धाः न मन्यन्ते। 'पालि' नामकजनभाषायाम् उपदेशप्रदानं चाऽप्यस्य व्यापकतानिदानम् भगवतो बुद्धस्य उपदेशाः त्रिपिटकनामके संग्रहग्रन्थे संगृहीताः सन्ति। ब्राह्मणाः राजानः श्रेष्ठिनः वैश्याः अपि त्रिरत्नम् - बुद्ध धर्मं, सङ्घं च—इमं धर्मं शरणमुपागच्छन्। अभारतीयाः जापान-वर्मा-तिब्बत-लङ्कादिदेशीया अपि एनमेव धर्मं शरणमुपागच्छन्।

भगवता बुद्धेन अलौकिक ज्ञानमयं ज्योतिः सर्वत्र प्रचारितं यदद्यापि भारतस्य गौरवं देशे विदेशे च सर्वत्र प्रख्यापयतीति।

## ( ३७ ) सम्राट् अशोकः

महाराजोऽयम् अशोकः मगधाधिपतेर्महाराजचन्द्रगुप्तस्य पौत्रः आसीत्। कुसुमपुरं (पाटलिपुत्रम्) नाम नगरम् अस्य राजधानी आसीत्। एकदाऽयं कलिङ्गराजेन सार्धं युद्धम् आरब्धवान्। तस्मिन्नेव युद्धे हताहतान् दृष्ट्वा म्रियमाणानां चार्तनादं निशम्य अस्य हृदयम् अकस्मात् परिवर्तितम्। तदित्थं दयार्द्रं जातं यत् तत्-समयादयं धर्मात्मा भूतेषु दयालुः सञ्जातः, स्वीचकार च बौद्धधर्मम्।

अथ तेन अनेकानि महान्ति कार्याणि कृतानि। समग्रे साम्राज्ये अनेकानि उद्यानानि आरोपितानि, मनुष्याणां पशूनां च कृते सर्वत्र चिकित्सालयाः स्थापिताः। नगरे नगरे स्तूपेषु स्तम्भेषु शिलोच्चयशिलासु च धर्मस्य न्यायस्य च नियमान् लेखितवान्। तत्सामयिकाः स्तम्भ-स्तूपलेखास्तु अद्यापि यत्र-तत्र भारते मिलन्ति।

सर्वत्रास्य राज्ये स्तूपादिलेखेषु इमे उपदेशा विलिखिताः सन्ति यत्—( १ ) 'स्वपित्रोराज्ञायां वर्तध्वम्। ( २ ) 'बालकेषु मित्रेषु च दयां कुर्वीध्वम्।' ( ३ ) 'पशुषु करुणां कुरुत।' ( ४ ) 'काम-क्रोध-लोभ-मोहाहङ्कारान् जयत।' इत्याद्यन्येऽपि बहवः उपदेशाः उल्लिखिताः सन्तीति।

एषः सम्राट् अशोकः एवम्भूतो धर्मप्रियः आसीत्, यत् प्राणाधिकप्रियं सुतं महेन्द्रं बौद्धधर्मप्रचाराय लङ्कां ( सीलोन ) प्रदेशं प्रेषितवान् तथा दुहितरं सघमित्रां राजकन्यां स्त्रीजने धर्मोपदेशाय तत्रैव प्रैषयत्। तत्र इमौ भ्रातरौ सफलायासौ बभूवतुः।

संघमित्रा स्वलङ्काप्रस्थानकाले तस्य वृक्षस्य शाखां सहात्मना नीतवती यस्य छायायां गौतमो बुद्धत्वं लेभे। सा शाखा लङ्कायाम् आरोपिता समूला जाता।

अद्यावधि वर्षाणां द्वे सहस्रे, द्वे शते चतुश्चत्वारिंशच्चैकं व्यतीतं किन्तु स वृक्षस्तथैव स्निग्धदल: सघनशीतलच्छायोऽधुनाऽपि जीवंस्तिष्ठति पूज्यते च बौद्धैः श्रमणैः श्रावकैश्च । समयेऽस्मिन् इयान् पुराणस्तरुर्नापरः कश्चित् । किं बहुना, तादृशः प्रजावत्सलः सम्राट् भारते तदनन्तरं न कश्चित् प्रादुर्बभूव इति ।

## ( ३८ ) महर्षिः दयानन्दः

अस्माकं भारतीया संस्कृतिः संसारस्य पुरातनसंस्कृतिषु प्रधानतमा परिगण्यते इतिहासज्ञैः । समये समये अनेके महापुरुषाः अत्रावतीर्य एताम् अस्मद्देशीयां संस्कृतिं श्रेष्ठतायाश्चरमसीमां प्रापयितुं प्रयतन्ते स्म । तेषु महर्षिः दयानन्दः प्रधानतम उन्नायकः आसीत् । एकदा महाभागोऽयं संसारस्य अनित्यतां विचारयन् सहसैव स्वगृहम् अत्यजत् ।

ततोऽसौ देशाद् देशान्तरं विचरन् व्याकरणवेदान्तादीन्यनेकानि शास्त्राणि विशेषतो योगपद्धतिं चाशिक्षत । विचरणकालेऽयं नर्मदातीरे स्वामिपूर्णानन्दसरस्वतीसकाशात् संन्यासमगृह्णात् । तदनु अयं देशसमाजयोरुन्नतये निरन्तरं धर्मप्रचारम् अकरोत् । पाखण्डोन्मूलनाय वैदिकधर्मसंस्थापनाय चाऽयं देशे देशे बभ्राम, येनाऽस्य महापुरुषस्य ख्यातिः सर्वत्र व्याप्ता ।

महापुरुषोऽयम् एकदा 'अनूपशहर' नामके नगरे धर्मप्रचाराय समागच्छत् तत्र मतमतान्तराणाम् आलोचनायां क्रियमाणायां केनचिद् असहिष्णुना जिघांसया महर्षिदयानन्दाय सविष ताम्बूलं प्रदत्तम् । भक्षणानन्तरं सविषं ताम्बूलम् अस्तीति विज्ञाय स महर्षिः हठयोगस्य क्रियया विषप्रभावं दूरीचकार ।

अथैकदायं महर्षिः जोधपुरनगरे यात्रामकरोत् । तत्र कस्यांचिद् गणिकायाम् आसक्तं जोधपुराधीशं विविधम् अबोधयत्, येन सा गणिका पादाहता उरगीव जगन्नाथनामानं पाचकं तोषयित्वा रात्रौ महर्षये पयसा सह विषम् अदापयत् ।

परमकारुणिको महर्षिः सद्यः एव विषप्रदानं विभाव्य जगन्नाथमाहूय मार्गव्ययं च दत्त्वा अगदत्—'यावद् अन्ये न जानन्ति त्वं शीघ्रमितः पलायस्व, नो चेत् प्रातः बन्दी भविष्यसि' इति । अहो, दया तस्य दयानिधेर्दयानन्दस्य यत् स्वहिंसकाय मार्गव्ययार्थं धनमपि दत्त्वा तं ररक्ष ।

महर्षिः दयानन्दः सत्यस्य धर्मस्य ब्रह्मचर्यस्य च मूर्तिः आसीत् । अयं महापुरुषः चिराय उपेक्षितानां वेदानां प्रचारमकरोत् । ऋग्वेदादिभाष्यभूमिका-सत्यार्थ-

प्रकाशसंस्कारविधिप्रभृतिग्रन्थांश्च हिन्दीभाषायाम् एव अलिखत् । अनेक महापुरुषेण देववाण्याः अपि महान् प्रचारः कृतः । विधवाऽबलानां दलितजातीनां गवां चोद्धाराय स सदैव ऽयतत । स्वातन्त्र्यभावनाऽपि प्रथममनेनैव महर्षिणा अस्माकं हृदयेषु जागरिता । अस्य महापुरुषस्य चरितं सदैव भारतीयानां मस्तकम् उन्नमयिष्यति । एतादृशाः महात्मानः सदैव सर्वेषां वन्द्याः इति ।

## ( ३९ ) लोकमान्यः श्रीबालगङ्गाधरतिलकः

स्वराज्यस्य मन्त्रद्रष्टा कर्मयोगस्य पूर्णावतारः अशेषविद्यानाम् आगारः भारतराष्ट्रस्य कुशलकर्णधारश्चाऽयं लोकमान्यः श्रीबालगङ्गाधरतिलकः देशस्य सर्वश्रेष्ठं नररत्नम् आसीत् । यथा सः असाधारणो विद्वान् उदाराशयः मनस्वी तथैव निपुणतमः राजनीतिज्ञोऽप्यासीत् । महात्मनः गान्धीमहोदयात् प्राग् देशस्य सर्वेष्वेव प्रान्तेषु समस्तेष्वेव समाजेषु यादृशः प्रभावः यादृशं गौरवं च तस्यासीत् न तादृशम् अन्यस्य कस्यापि राष्ट्रनायकस्य। आसेतुहिमाचलम् आसीत्तस्य असाधारणः सम्मानः । यदा स्वातन्त्र्यस्य नामग्रहणमपि अमन्यत महापराधः, तस्मिन् भयानकेऽपि गौराङ्गशासने स 'स्वराज्यमस्माकं जन्मसिद्धाऽधिकारः' इति निर्भयं निनादं कृतवान् । तिलकस्य प्रगाढां विद्वत्तां प्रौढं साहित्यज्ञानम् अपूर्वां देशभक्तिं च दृष्ट्वैव देशवासिनः इमं 'लोकमान्य' इत्युपाधिना अलञ्चक्रिरे ।

१८८७ तमे ईशवीये बम्बईप्रान्ते 'प्लेग' नामकरोगस्य भयङ्करः प्रकोपोऽभवत् । तत्प्रतिकारार्थं शासनद्वारा प्रवर्तिताः उपायाः गृहपरित्यागादिरूपाः व्याधेरपि कष्टतराः असह्यतराश्च अभूवन् । अन्ततः केनचित् पुरुषेण 'प्लेग कमिटी' नाम्न्याः समितेः समापतेः 'रैण्ड' महोदयस्य वधः कृतः । तस्मिन् आन्दोलने सः अष्टादशमासेभ्यः कारागारे स्थापितोऽभूत् । तत्रैव सः अत्यन्तगवेषणापूर्णम् 'आर्यनिवास' नामकं वैदिकनिबन्धं लिखितवान् । तं पठित्वा तिलकमहाराजस्य असाधारणं पाण्डित्यं विज्ञाय मैक्समूलरमहोदयः तस्य मोक्षणाय महाराज्ञीं विक्टोरियां प्रार्थितवान् । तेन अवधितः पूर्वमेव स महाभागः कारागारात् मुक्तः सञ्जातः ।

एकदा लोकमान्यसञ्चालिते 'केसरि' नामके समाचारपत्रे 'देशस्य दुर्भाग्यम्', 'इमे उपायाः न स्थायिनः' इति लेखौ प्रकाशितौ । आपत्तिजनकौ कथयित्वा तस्य विरुद्धं षड्वर्षावधि देशनिष्कासनरूपं दण्डं कृतवान् तं प्रधानन्यायाधीशः । तस्मिन्नेव अवधि विदेशे आध्यात्मिकं जीवनं यापयन् स्वकीयस्य अगाधपाण्डि-

त्यस्य फलस्वरूपं 'गीतारहस्य' नामकं ग्रन्थरत्नं प्रणीय स स्वदेशं प्रत्यागत्य पुनः पूर्णोत्साहेन देशसेवाकार्याणि कर्तुं प्रारब्धवान् । 'स्वराज्यम् अस्माकं जन्मसिद्धोऽधिकारः, तत्प्राप्त्यैव विरंस्यामः' इति तस्य महापुरुषस्य सिंहनादः समस्ते एव राष्ट्रे प्रतिध्वनितोऽभूत् । स स्वराज्यसंघं संस्थाप्य तस्य पूर्णप्रचारं कृतवान् । तस्य प्रयत्नेनैव उत्तरदायित्वपूर्णं शासनं लब्धं स्वदेशवासिभिः । १९१९ तमे ईशवीये तस्य जन्मदिवसमुपलक्ष्य लक्षरूप्यकाणि तस्मै उपहारीकृतानि देशवासिभिः । किन्तु तेन किमपि स्वयम् अगृहीत्वा 'होमरूमलीग' नाम्न्यै राष्ट्रियसंस्थायै तानि प्रदाय निःस्पृहतायाः प्रज्वलम् उदाहरणं प्रदर्शितम् । तद्विषये उक्तञ्च—

दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय ।
परोपकाराय वचांसि यस्य धन्यस्त्रिलोकीतिलकः स एव ॥

## ( ४० ) महात्मा गान्धी

महात्मनः पूर्णं नाम 'मोहनदासकर्मचन्दगान्धी' अस्ति । अयं महात्मा वर्तमानयुगस्य श्रेष्ठतमः महापुरुषः आसीत् । अस्यैव महात्मनः समुद्योगेन परतन्त्रा भारतभूमिः स्वतन्त्रा जाता । महापुरुषोऽयं प्राक् सम्पूर्णभारतवर्षस्य भ्रमणं कृत्वा ग्रामसुधारस्य खादीप्रचारस्य अवश्यकताम् अनुभूय तदनु कार्यरूपेण सत्याग्रहान्दोलनम् समारब्धवान् । भारतीयसमाजे अन्त्यजानां महतीं दुर्दशाम् अवलोक्य अतीव व्यथितोऽभूदिति अस्यैव महात्मनः समुद्योगेन सर्वे अन्त्यजाः समानाधिकारं प्राप्तवन्तः ।

अस्य महात्मनः पिता श्रीकर्मचन्दगान्धीमहोदयः राजकोटनाम्नः राज्यस्य प्रधानमन्त्री आसीत् । पितरि स्वर्गं गते सति मैट्रिकपरीक्षामुत्तीर्य विधि ( कानून ) शास्त्रमध्येतुम् अयम् इङ्गलैण्डदेशं गतः । ततश्च बैरिस्टरीपरीक्षाम् उत्तीर्य प्रत्यागत्याऽयं महात्मा १९०० तमे ईशवीये वर्षे कलकत्तानगरे भारतीयकांग्रेसस्य महाधिवेशने भागं ग्रहीतुमुपस्थितः, यत्र लोकमान्यतिलक-गोखले-प्रभृतिभिर्महानुभावैरस्य साक्षात् परिचयो जातः ।

एकदा अफ्रीकावासिभिः भारतीयैः आमन्त्रितोऽयं तत्र गत्वा भारतीयानां दुःसहदुर्दशां विलोक्य तेषामुद्धाराय तत्रैव प्रथमं सत्याग्रहम् आरब्धवान् । यत्प्रसङ्गे अनेन बहुशः कारावासोऽपि समासादितः । विंशतिवर्षपर्यन्तं तत्र श्रान्त्वाऽयं गौराङ्गशासनं नमयामास, येन सर्वे सत्याग्रहीणो मुक्ताः सर्वाश्च प्रार्थनाः स्वीकृताः । अफ्रीका-

देशात् प्रत्यावर्त्याऽयं भारतेऽपि असहयोगनामकम् आन्दोलनं चालयामास। यस्मिन् आन्दोलने लक्षाधिकैः जनैः स्वपदवी जीविका च परित्यक्ताः। 'जालियाँवालावाग' नामके स्थाने यदा दमनचक्रं प्रावर्तत, तदा तत्र गच्छन्नयं मध्येमार्गमेव अवरुध्य बम्बईनगरं प्रेषितः शासकैः। तत्प्रतिक्रियायां देशे सर्वत्र विद्रोहः प्रावर्तत। १९४२ तमे ईशवीये 'भारत छोड़ो' नामकम् अन्तिमम् आन्दोलनं प्रारब्धवान् सः। चरमे आन्दोलने अस्मिन् सर्वे नेतारः कारावासे न्यस्ताः। देशः तत्कारावासं सोढुमशक्तो महता वेगेन आन्दोलनं आरब्धवान्। येन १९४७ तमे ईशवीये अगस्तमासस्य १५ दिनाङ्के भारत स्वतन्त्रम् अजायत। महात्मनः स्वप्नश्च साकारताम् अभजत।

## (४१) महामनाः पं० मदनमोहनमालवीयः

भारतवर्षस्यास्य स्वातन्त्र्यविधाने प्रयत्नशीलानां नायकानां मध्ये महामनसः श्रीमालवीयस्याऽपि श्रेष्ठं स्थानं मन्यते। भारतस्य सर्वाङ्गीणसमुत्थाने सर्वैः प्रकारैः तेन महान् यत्नः कृतः। श्रीमालवीयमहाराजस्य सेवाकार्याणि अनन्तकालपर्यन्तं देशवासिनां मनःसु सुदृढं पदं करिष्यन्ति। न केवलेन राजनीतिकस्वातन्त्र्यलाभेनैव राष्ट्रस्य वास्तविकम् उत्थानं भवितुमर्हति, अपि तु धर्मस्य संस्कृतेः साहित्यस्य च संरक्षणम् अत्यन्तम् आवश्यकम्' इति अमन्यत महामनाः। गोरक्षणं विना लब्धेऽपि स्वातन्त्र्ये देशस्य कल्याणम् असम्भवीति तस्यासीद् दृढा धारणा। मालवीयमहाराजस्य प्रयत्नेनैव 'अभ्युदय' नाम्नः हिन्दीसमाचारपत्रस्य 'लीडर' नाम्नः आंग्लसमाचारपत्रस्य च जन्म अभूत्। ताभ्यां जनतायाः महान् उपकारः संसाधितोऽभूत्। १९०९ तमे ईशवीये कांग्रेसराष्ट्रियमहासभायाः अधिवेशने महामनाः सभापतिपदम् अलङ्कृतवान्। विदेशीयवस्तूनां बहिष्कारे सर्वेषां देशनायकानां अग्रगण्य एव आसीत् महामनाः। समाजसेवाकार्येऽपि तस्य असाधारण एव उद्योगः अभूत्। स्वकीयजन्मस्थाने प्रयागे साहित्यिकसमितिरपि तेनैव स्थापिता। काशीनागरीप्रचारिणीसभायाः स्थापना च तेनैव कृता। पञ्जाबहत्याकाण्डस्य समये या सेवा तेन कृता सा न कस्याप्यविदिताऽस्ति चौरी-चौराकाण्डेपि स्वयं बहूनि कष्टानि सोढ्वाऽपि तेन बहूनां भारतीयानां प्राणरक्षा कृता। असाधारणेन अध्यवसायेन भारतस्य भारतीयानां च कीर्तिस्तम्भं काशीहिन्दूविश्वविद्यालयं संस्थाप्य हिन्दूसंस्कृतिं हिन्दूगौरवम् च अमरं कृतवान् मालवीयमहाराजः। राष्ट्रस्य समाजस्य धर्मस्य शिक्षायाश्च समुत्थानाय यावन्ति

कार्याणि कृतानि महामनसा नान्येन केनाऽपि नेत्रा तावन्ति कृतानि करिष्यन्ते चेति निर्विवादम्'। तस्य निम्नाङ्कितः अमरः सन्देशः श्रद्धया प्रेम्णा च अणुसरणीयः अभ्युदयाभिलाषिभिः छात्रैः—

'सत्येन ब्रह्मचर्येण व्यायामेनाऽथ विद्यया ।
देशभक्त्यात्मत्यागेन सम्मानार्हः सदा भव ॥'

## ( ४२ ) सरदारो वल्लभभाई पटेलः

सरदारोपाधिकोऽयं पटेलमहोदयः स्वातन्त्र्यान्दोलने महात्मनो गान्धिमहोदयस्य दक्षिणहस्तः आसीत् । सर्वप्रथममनेन साबरमत्यास्तटे सत्याग्रहाश्रमः स्थापितः, तदनु महाभागेनानेन वारदोलीग्रामे स्वराज्याश्रमः स्थापितः । ततः कृषकाणां संघटनं विधाय करविरोधि आन्दोलनं समचालयत् । तस्य साफल्यपूर्वकं नेतृत्वकरणेनैव अयं परां प्रसिद्धि प्राप । १९३१ तमे ईशवीये निखिलभारतीये कांग्रेसराष्ट्रीय महासभाधिवेशने सभापतिरयं निर्वाचितः । १९३७ तमे ईशवीये प्रान्तेषु निर्मितानां कांग्रेसमन्त्रिमण्डलानां विधानसंबन्धिनां कार्याणां प्रधानसञ्चालकः स्वमेव महाभागोऽवर्तत । स्वराज्यप्राप्तिसंघर्षे अयं बहुशः कारागारं सिषेवे। १९४७ तमे ईशवीये देशविभाजनानन्तरं भारतीये मन्त्रिमण्डले अयं देशीराज्यविभागस्य सञ्चालनभारं स्वीकृतवान् । अयं स्वतन्त्रभारतस्य सर्वश्रेष्ठः संगठनकर्ता आसीत् अखिलभारतीयमहासभासदस्या एनं लौहपुरुषम् अमन्यन्त । अयमनुशासनपालकः स्पष्टवादी अङ्गीकृतस्य परिपालकश्चासीत् । अयं षट्शतदेशीयराज्यानां समस्याम् अनायासेन समाहितवान् । स्वतन्त्रताप्राप्त्यनन्तरं वर्षद्वये एव च भारतस्य मानचित्रं परिवर्तितमनेन। महानुभावोऽयं भारतस्य सर्वश्रेष्ठः संघटनकर्ता आसीत् साम्प्रतमेतस्य स्थानस्य पूर्तिः नितरामसम्भवेति ।

## ( ४३ ) प्रथमराष्ट्रपतिः डॉ० राजेन्द्रप्रसादः

येषां नरपुङ्गवानां साधनाभिः भारतमिदं स्वातन्त्र्यम् अभजत तेष्वन्यतमोऽयं डा० रागेन्द्रप्रसादः । अस्य महापुरुषस्य नामस्मरणमात्रेण अधुनाऽपि भारतीयाः सुखं शान्ति च प्राप्नुवन्ति । १९१७ तमे ईशवीये महात्मनः गान्धिमहोदयस्य प्रथमभारतीयसत्याग्रहान्दोलनेऽयं चम्पारणमण्डले तस्य सहायतायां सलग्नो जातः ।

तदनन्तरं त्वयं विहारप्रान्ते भ्रान्त्वा हिन्दीभाषाप्रचार-मादकवस्तुनिषेध-अस्पृश्योद्धारादिरचनात्मककार्येषु भागम् अग्रहीत्। तदनु १९२३ तमे ईशवीयेऽयं कांग्रेसमहासभायाः मन्त्री निर्वाचितः। तस्मिन्नेवावसरे अयं महापुरुषः स्वीयया सरलतया निःस्पृहतया योग्यतया च देशरत्नोपाधिना विभूषितोऽभूत्। तदारभ्य आस्वतन्त्रताप्राप्ति देशरत्नोपाधिकोऽयं महापुरुषः महात्मनः गान्धिमहोदयस्य दक्षिणहस्तवत् व्यवहरति स्म। १९४२ तमे ईशवीये अन्तिमे महान्दोलने त्वयं रुग्णः सन्नपि वर्षत्रयं यावत् कारावासम् अन्वभूत्। इतः पूर्वमप्यनेन नानाविधेषु देशहिताधायिकार्येषु बहुवारं कारावासोऽनुभूतः।

यदा चेदमीयमहता प्रयासेन १९४७ तमे ईशवीये भारतं स्वतन्त्रम् अजायत तदा तस्य महापुरुषस्य योग्यतया आकृष्टो देशः प्रथमराष्ट्रपतिपदे अमुम् अभिषिच्य वारत्रयं पुनस्तदावर्त्यं च स्वां गुणग्राहितां प्रकटीकृतवान्। अधुना दिवङ्गतो भूत्वाप्ययं महापुरुष देशवासिनां परमादरभाजनं भूत्वा लोकहृदये विराजत इति।

## ( ४४ ) नेताजी सुभाषचन्द्रो वसु

अयम् अस्माकं महान् वीरो नेता वसुमहोदयः आई० सी० एस० परीक्षामुत्तीर्य इङ्गलैण्डदेशाद् यदा स्वदेशं प्रत्यावर्तत तदा अत्र देशे महात्मना गान्धिमहोदयेन असहयोगान्दोलनं प्रवर्तितमासीत्। तदवलोक्य श्रीसुभाषस्य हृदयेऽपि राष्ट्रसेवायाः भावना प्रज्वलिता। देशबन्धोः श्रीचितरंजनदासस्य आदेशान् अनुसरंश्चाऽयं मातृभूमिसेवायां संलग्नो बभूव। यदा महात्मा गान्धी सत्याग्रहान्दोलनं प्रारभत तदा श्रीसुभाषः राष्ट्रियसेवकदलस्य आधिपत्ये नियुक्तः स्वां संघटनप्रतिभां प्राकाशयत्। महानुभावोऽयं राष्ट्रियसभायाः अध्यक्षपदमपि द्विवारं समलञ्चकार। १९३० तमे ईश्वीये वर्षे जनवरीमासस्य २६ दिनाङ्के सर्वत्र महात्मनः गान्धिमहोदयस्यादेशात् स्वतन्त्रतादिवसस्य प्रथमः समारोहः आसीत्। समयेऽस्मिन् वीरसुभाषोऽपि अधिकारिभिः कारागारे निक्षिप्तः। परं तत्रैव कारागारे वीरोऽसौ तस्मिन् दिने कांग्रेसराष्ट्रध्वजं समारोपयत्। तेन अधिकारिभिः स भृशं पीडितः येनास्य स्वास्थ्यं नितान्तं विगलितम्।

एकदा श्रीसुभाषः 'देशेऽत्र ब्रिटिशसत्तायाः प्रतिद्वन्द्विनी राष्ट्रियशासनसत्ताऽपि स्थापनीया' इति स्वमतं प्राचारयत्। परं यदा महात्मा गान्धी विचारमिमं नाऽनु-

मोदितवान् तदा कांग्रेसराष्ट्रियमहासभायाः कार्यसमिति परित्यज्य 'फारवर्डब्लाक' नाम्नी अग्रगामिदलस्य स्वतन्त्रसंस्था संस्थापिता अनेन।

श्रीसुभाषः भारतमातुः परतन्त्रतायाः बन्धनं छेत्तुं दिने दिने अधिकतरां व्याकुलताम् अनुभवति स्म। यदा द्वितीयमहायुद्धस्य विभीषिका अखिलान् लोकान् आतङ्कितान् अकरोत् तदा वीरः सुभाषः भारतमातुर्भुक्तये एकदा रात्रौ शाक्यमुनिरिव स्वभवनं परित्यज्य ऐन्द्रजालिक इव महामहिमशालिनीं भारताधिरूढाम् अखिलां ब्रिटिशसत्तां प्रतार्य देशाद् देशान्तरं परिभ्रमन् जापानदेशं प्राप। पूर्वद्वीपेषु स्थितैः सर्वैरपि भारतीयैः वीरसुभाष एव नेता अमन्यत। अत एव स तत्र 'नेताजी' इति नाम्ना प्रसिद्धिमाजगाम।

अथ तत्र नेताजी सुभाषचन्द्रो वसुः 'आजाद हिन्द फौज' नाम्नीं सेनाम् 'आजाद हिन्द सरकार' इति सत्तां च स्थापयामास। नेताजी शस्त्रबलेन स्वकीयभारतदेशं स्वतन्त्रं कर्तुम् इयेष। असंख्याता भारतीयास्तत्र सम्प्रदायं जातिं वर्णं चानपेक्ष्य तस्य 'आजाद हिन्द' सेनायां प्रविष्टा अभूवन्। सैषा 'आजाद-हिन्द-सेना' वर्मादेशस्य सीमाम् अतिक्रम्य भारतस्य इम्फलप्रदेशे ब्रिटिशगौराङ्गसेनां विजित्य 'आजाद-हिन्द-ध्वजम्' आरोपयत्। समतिक्रान्ते कस्मिंश्चित् काले तत्र दुर्गमप्रदेशे भोज्यवस्तुवैकल्यात् विषाक्तजलवायुप्रभावाच्च 'आजादहिन्दसेनायाः' बहवः सैनिकाः मृताः आहताश्च। तदानीं दैवदुर्विपाकात् नेताजी सुभाषोऽपि वायुयानेन टोकियोनगरं गच्छन् वायुयानध्वंसेन अध्वन्येव यशःशेषताम् अगात्। दिष्ट्या तदाहुतिः फलिता, इदानीं दिवि मोदते सुभाषः। परन्तु यावद् वसुन्धरायाः स्थितिः तावत् तस्य वीरस्य स्मृतिरपि मानवहृदयेषु स्थायिनी भविष्यतीति निश्चप्रचम्।

## ( ४५ ) प्रथमः प्रधानमन्त्री प० जवाहरलालनेहरू

स्वतन्त्रभारतस्य नाम्ना सहैव प० जवाहरलालनेहरूमहोदयस्य नाम अविच्छिन्नरूपेण सम्बद्धं विद्यते। भारतीया यावती समुन्नतिर्जाताऽस्ति, यावन्तः अभ्युदयोपायाः प्रक्रम्यमाणाः दृश्यन्ते सर्वत्रास्य भारतीयहृदयसम्राजः प्रभावः प्रकटरूपेण दृश्यते। नेहरूमहाभाग एव एतादृशः जनप्रियो नेता आसीत् यः मानवतायाः आकाशे प्रदीप्तनिर्मलभास्कर इव स्वकीयैः सेवाभावैः मानवानां हृदयेषु सर्वोच्चं स्थानं प्राप्तवान्।

क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥

क्षुधासमा नास्ति शरीरवेदना
चिन्तासमा नास्ति शरीरशोषणा ।
विद्यासमा नास्ति शरीरभूषणा
वृत्त्या समा नास्ति शरीरषोपणा ॥

( च ) चिता चिन्ता द्वयोर्मध्ये चिन्ता ह्येव गरीयसी ।
चिता दहति निर्जीवं चिन्ता चैव सजीवकम् ॥

( द ) दारिद्र्याद् ह्रियमेति ह्रीपरिगतः सत्वात् परिभ्रश्यते,
निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो, निधनता सर्वापदामास्पदम् ॥

दिवा पश्यति नोलूकः काको नक्तं न पश्यति ।
अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥
दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥

( ध ) धनेन किं यो न ददाति चाऽश्नुते,
बलेन किं यश्च रिपून् न बाधते ।
श्रुतेन किं यो न च धर्ममाचरेत्,
किमात्मना यो न जितेन्द्रियो भवेत् ॥
धर्माख्याने श्मशाने च रोगिणां या मतिर्भवेत् ।
सा सर्वदैव तिष्ठेच्चेत् को न मुच्येत बन्धनात् ॥

( न ) न गृहं गृहमित्याहुः तुलसी गृहमुच्यते ।
सदनं तुलसीहीनं श्मशानान्नातिरिच्यते ॥
न तेन वृद्धो भवति येनाऽस्य पलितं शिरः ।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥
नदीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथा ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥

न विषादे मनः कार्यं विषादो बलवत्तरः ।
विषादो हन्ति पुरुषं बालं क्रुद्धं इवोरगः ॥
न हि ज्येष्ठस्य ज्येष्ठत्वं गुणैर्ज्येष्ठत्वमुच्यते ।
केतकीवरपत्रेषु लघुपत्रस्य गौरवम् ॥
नात्यन्तं सरलैर्भाव्यं गत्वा पश्य वनस्थलीम् ।
छिद्यन्ते सरलास्तत्र कुब्जास्तिष्ठन्ति पादपाः ॥
नाऽधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥
नाऽधार्मिके वसेद् ग्रामे न व्याधिबहुले भृशम् ।
नैकः प्रपद्येदध्वानं न चिरं पर्वते विशेत् ॥
नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः ।
नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानात् परं सुखम् ॥
निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव मरणमस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥
निर्वाणदीपे किमु तैलदानं
चौरे गते वा किमु सावधानम् ।
वयोगते किं वनिता-विलासः
पयोगते किं खलु सेतुबन्धः ॥
(प) परान्नं परवस्त्रं च परशय्यां परस्त्रियम् ।
परवादं परद्रव्यं दूरतः परिवर्जयेत् ॥
पापान्निवारयति योजयते हिताय
गुह्यान् निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति लोके
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥
पूर्वे वयसि तत् कुर्याद् येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत् कुर्याद् येन प्रेत्य सुखं वसेत् ॥

प्रायश्चित्तं चिकित्सां च ज्योतिषं धर्मनिर्णयः।
विना शास्त्रेण यो ब्रूयात् तं विद्याद् ब्रह्मघातकम् ॥
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते।
काष्ठान्यपि हि जीर्यन्ते दरिद्राणां च सर्वशः ॥
प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति ॥

(ब) ब्राह्मणोऽपि मनुष्याणामादित्यश्चैव तेजसाम्।
शिरोऽपि सर्वगात्राणां व्रतानां सत्यमुत्तमम् ॥

(भ) भोजनान्ते पिबेत् तक्रं वासरान्ते पिबेत् पयः।
निशान्ते च पिबेद् वारि त्रिभी रोगो न जायते ॥

(म) मक्षिका मशको वेश्या मूषकः पाचकस्तथा।
ग्रामणीर्गणकश्चैव सप्तैते परभक्षकाः ॥
मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः।
नीचाः कलहमिच्छन्ति शान्तिमिच्छन्ति साधवः ॥
मनःशौचं कर्मशौचं कुलशौचं तथैव च।
शरीरशौचं वाक्शौचं शौचं पञ्चविधं स्मृतम् ॥
पञ्चस्वेतेषु शौचेषु हृदि शौचं विशिष्यते।
हृदयस्य तु शौचेन स्वर्गं गच्छति मानवः ॥
मनसैव कृतं पापं न शरीरकृतं कृतम्।
येनैवाऽऽलिङ्गिता कान्ता तेनैवाऽऽलिङ्गिता सुता ॥
मनो मधुकरो मेघो मानिनी मदनो मरुत्।
मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः ॥
मनो हि जगतां कर्तृ मनो हि पुरुषः परः।
मनकृतं कृतं लोके न शरीरकृतं कृतम् ॥
माता शत्रुः पिता वैरी येन बालो न पाठितः।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥

मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥

मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः,
प्राप्तं यत् सुखदुःखयोः सह भवेन्मित्रेण तद् दुलभम् ।
ये चाऽन्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुला-
स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥

मृत्युर्त्रिभेषि किं मूढ, भीतं मुञ्चति किं यमः ।
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥

( य ) यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमांल्लोके यस्यार्थाः स हि पण्डितः ॥

यावत् स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा,
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्,
प्रोद्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥

( र ) रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥

(व) वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयं पक्वफलाम्बुभोजनम् ।
तृणानि शय्या परिधानवल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वेदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥

वेपथुर्मलिनं वक्त्रं दीनां वाग् गद्गदः स्वरः ।
मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥

वैद्या वदन्ति कफपित्तमरुद्विकारा
ज्योतिर्विदा ग्रहगतिं परिवर्तयन्ति ।
भूताऽभिषंग इति भूतविदो वदन्ति
प्रारब्धकर्म बलवन्मुनयो वदन्ति ॥

(श) शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशितांकुशेन समदो दण्डेन गोगर्दभौ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥

शतं विहाय भोक्तव्यं सहस्रं स्नानमाचरेत्।
लक्षं विहाय दातव्यं कोटिं त्यक्त्वा हरिं भजेत् ॥

शनैः शनैस्तुः भोक्तव्यं स्वयं वित्तमुपार्जितम्।
रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥

शास्त्राण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान् पुरुषः स विद्वान्।
सुचिन्तितं चौषधमातुराणां
न नाममात्रेण करोत्यरोगम् ॥

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥

(स) सन्तोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने।
त्रिषु चैव न कर्तव्यो दाने तपसि पाठने ॥

सम्पदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विलरम् ॥

सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः।
श्रद्धधानोऽनसूयश्च शतं वर्षाणि जीवति ॥



## छात्र-प्रतिज्ञा

पठनात् पाठनाच्चैव प्रचाराद् व्यवहारतः।
रक्षिष्यामि प्रयत्नेन स्वीयं सारस्वतं निधिम् ॥ १ ॥

पठन, पाठन, प्रचार तथा व्यवहार इन उपायोंसे मैं यत्नपूर्वक राष्ट्रिय अपनी सारस्वत निधिकी रक्षा करूँगा ॥ १ ॥

मनूपदिष्ट-मार्गेण विद्या-चारित्र-संयुतः।
चरित्रं शिक्षयिष्यामि पृथिव्यां सर्वमानवान् ॥ २ ॥

विद्या और चरित्रसे युक्त होकर मैं मनुके उपदेशानुसार पृथिवीके समस्त मानवोंको चरित्रकी शिक्षा दूँगा ॥ २ ॥

हिताय सर्वजगतो भारतीयार्य-संस्कृतिम्।
पुनः प्रचारयिष्यामि समस्ते पृथिवातले ॥ ३ ॥

समस्त जगतके कल्याणके लिये मैं सम्पूर्ण पृथिवीमंडल पर भारतीय आर्य-संस्कृतिका पुनः प्रचार करूँगा ॥ ३ ॥

सर्वान् सामाजिकान् दोषान् कुरीतीरखिलास्तथा।
नाशयित्वा करिष्यामि समाजं च समुज्ज्वलम् ॥ ४ ॥

समाजमें प्रचलित समस्त दोषों तथा सभी कुरीतियोंको नष्टकर मैं समाजको सब प्रकारसे निर्दोष तथा निर्मल बनाऊँगा ॥ ४ ॥

सर्वं प्राच्यं तथा नव्यं ज्ञानं विज्ञानमेव च।
ज्ञात्वा सम्यग् गुणैस्तेषां शाधयिष्ये जगद्धितम् ॥ ५ ॥

समस्त प्राचीन तथा नवीन ज्ञान-विज्ञानका समुचित रूपसे अध्ययन कर उनके गुणों और उनकी निर्दोष कल्याणकारी मन्यताओं से जगत् का हितसाधन करूंगा ॥ ५ ॥

ज्ञानं सत्यं सदाचारं स्नेहं न्यायं च सर्वतः।
स्थापयित्वा करिष्यामि सुखशान्तिमयं जगत् ॥ ६ ॥

ज्ञान, सत्य, सदाचार, स्नेह तथा न्यायका सर्वत्र स्थापन एवं प्रचार कर जगतको सुख और शांतिमय बनाऊँगा ॥ ६ ॥

आत्मज्ञानेन विज्ञानं सदाचारेण शिक्षणम्।
बुद्धया धर्मं च संयोज्य करिष्ये विश्वमङ्गलम् ॥ ७ ॥

विज्ञानके आत्मज्ञानसे, शिक्षाको सदाचारसे तथा धर्मको बुद्धिसे संयुक्तकर समस्त विश्वका मङ्गल-साधन करूँगा ॥ ७ ॥

त्यक्त्वा सङ्कीर्णतां सर्वां सदा भूमानमास्थितः।
उच्चलक्ष्यो विशालात्मा वर्तिष्ये लोकसंग्रहे ॥ ८ ॥

संकीर्णताओंका त्यागकर सदा भूमाको ही दृष्टिमें रखते हुए उच्च लक्षण एवं विशाल हृदय हो कर लोकसंग्रहमें निरत रहूँगा ॥ ८ ॥

नेतृत्वं शासनं शस्त्रं सेवां साहित्यमेव वा।
गृहीत्वा राष्ट्रसेवायाश्चरिष्ये व्रतमुत्तमम् ॥ ९ ॥

नेतृत्व, शासन, शस्त्र, सेवा अथवा साहित्य के माध्यम से राष्ट्रसेवा के श्रेष्ठ व्रत का पालन करता रहूँगा ॥ ९ ॥

( श्लो० १–९ पं० वासुदेव द्विवेदी, संचालक–सार्वभौम संस्कृत प्रचार कार्यालय, वाराणसी से प्राप्त )

इति 'मिथिला' महीस्थदरभंगामण्डलान्तर्गत 'तरौनी' ग्रामवासिशास्त्रार्थदिवाकर-पण्डितराजश्रीजयदत्तझाशर्मात्मज-पण्डितश्रीमदनन्तलालझाशर्मसूनुना विद्या-भारती-प्रदीप-सरस्वती-चतुष्टयजनकेन पण्डितरामचन्द्रझा व्याकरणाचार्येण सम्पादितं 'संस्कृतव्याकरणम्' समाप्तम्।

# प्रश्नपत्राणि

## प्रथमा परीक्षा : संस्कृत विश्वविद्यालय

### १९६४

१. निम्ननिर्दिष्टगद्यभागेषु केषाञ्चित् त्रयाणां हिन्दीभाषया अनुवादः कार्यः—

( क ) यो मनुष्यो यत्र जन्म लभते, सा तस्य जन्मभूमिः। जन्मभूमिः मनुष्यस्य सर्वदैव आदरस्य पात्रं भवति। यत्र कुत्रापि गतो मनुष्यो जन्मभूमि सदा स्मरत्येव। तद्दर्शनस्याभिलाषः तस्य हृदये वर्तते। भारतवर्षोऽयमस्माकं जन्मभूमिः। भारतवर्षश्चास्माकं देशः। स्वदेशस्य कृते सर्वेषां हृदये सम्मानः आदरश्च भवति।

( ख ) सा विद्या अस्ति, यस्याः प्रसादाज्जनो विनीतो भवति। संस्कृतविद्यया हि जनो विनीयते। यथा संस्कृतभाषा विनयमादधाति, न तथाऽपरा भाषा। देववाणीपदाभ्यासपराः पण्डिताश्छात्राश्चात्र प्रमाणम्। यावन्तः संस्कृतभाषाऽध्यायिनः विनीताः सत्पथानुगामिनश्च भवन्ति, न तावन्तोऽन्यभाषाध्यायिन इति। विनयः सत्पथानुवर्तिता च प्रधानो गुणः। एतदर्थमपि सर्वप्रकारेण संस्कृतस्य प्रचारः कर्त्तव्यः।

( ग ) अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम्। तत्र मणिभद्रो श्रेष्ठी प्रतिवसति स्म। तस्य च धर्मार्थकाममोक्षकर्माणि कुर्वतो विधिवशात् धनक्षयः सञ्जातः। ततो विभवक्षयात् अपमानपरम्परया परं विषादं गतः। अथान्यदा रात्रा सुप्तश्चिन्तितवान्—'अहो! धिगियं दरिद्रता। उक्तञ्च—शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म। न विराजन्ति हि सर्वे वित्तविहीनस्य पुरुषस्य।'

( घ ) ( i ) रामः—के यूयं वद ?

( ii ) लक्ष्मणः—नाथ ! नाथ ! किमिदं, दासोऽस्मि ते लक्ष्मणः।

( iii ) रामः—कोऽहं वत्स ?

( iv ) लक्ष्मणः—स आर्य एव भगवन् !

( v ) रामः—आर्यः स कः ?

( vi ) लक्ष्मणः—राघवः।

( vii ) रामः—किं कुर्मो विजने वने तत इतः ?

(viii) लक्ष्मणः—देवी समुद्वीक्ष्यते ।

(ix) रामः—कः देवी ?

(x) लक्ष्मणः—जनकाधिराजतनया ।

(xi) रामः—हा ! हा ! प्रिये जानकि !

(ङ) (i) बलवती शिरोवेदना मां बाधते ।

(ii) आज्ञा गुरूणामविचारणीया ।

(iii) सागरं वर्जयित्वा कुत्र महानद्यवतरति ।

(iv) विनाशधर्मेषु विषयेषु मनो मा सन्निवेशय ।

(v) अस्मात्स्थानात् पदात्पदमपि न गन्तव्यम् ।

(vi) न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ।

(vii) अर्द्धो घटो घोषमुपैति नूनम् ।

(viii) महान् महत्येव करोति विक्रमम् ।

(ix) पयः पानं भुजङ्गानां केवलं विषवर्द्धनम् ।

(x) एका क्रिया द्व्यर्थकरी प्रसिद्धा ।

२. अधोऽङ्कितहिन्दीवाक्येषु केषाञ्चित् अष्टानाम् वाक्यानाम् संस्कृतभाषायाम् अनुवादः विधेयः—

(क) देवदत्त अपने पुत्र के साथ घर जाता है । वहाँ उसके पास आम के पाँच पेड़ हैं ।

(ख) दशरथ के चारों पुत्रों में राम बड़े थे । उन्होंने लङ्का जाकर रावण को मारा था ।

(ग) मैं आज ही नगर जाऊँगा और वहाँ नाटक देखूँगा ।

(घ) जहां सत्य रहता है वहाँ विजय होती है । अतः युद्ध में भारतवर्ष की विजय होगी ।

(ङ) तुम लोग देखो—घड़ा बनाने वाला आ रहा है ।

(च) मित्र ! क्या स्मरण करते हो कि हम लोग वन में खाते थे ।

(छ) चारपाई पर बैठकर गुरु को प्रणाम नहीं करना चाहिये ।

(ज) अरुन्धती ने कहा—सीता ! मैं आशीर्वाद दे रही हूँ—तुम पुत्रवती हो ।

(झ) क्या मैं जाऊँ ? आपकी क्या आज्ञा है ?

( ञ ) उस अनड्वान् के तीन ही पैर थे।

( ट ) हम लोगों को माता का आदर अवश्य करना चाहिये।

( ठ ) यहाँ, वहाँ, कहाँ, ऐसा, जैसा आदि शब्द अव्यय हैं।

( ड ) सत्य बोलो। स्वच्छ रहो। स्पष्ट लिखो। डरो मत। तुम मनुष्य हो।

( ढ ) मैं आऊँगा। वह आज देखता था। यह बढ़ेगा। तुम लोग लिखोगे। दो बालिकायें गायेंगी।

## १९६५

१. निम्ननिर्दिष्टसंस्कृतभागस्य हिन्दीभाषयानुवादो विधेयः—

कस्मिंश्चिदधिष्ठाने शुद्धपटो नाम रजकः प्रतिवसति स्म। यस्य च गर्दभ एकोऽस्ति सोऽपि घासाभावादतिदुर्बलतां गतः। अथ तेन रजकेनाटव्यां परिभ्रमता मृतव्याघ्रो दृष्टः। चिन्तितं च—'अहो! शोभनमापतितम्। अनेन व्याघ्रचर्मणा प्रतिच्छाद्य रासभं रात्रौ यवक्षेत्रेषु उत्स्रक्ष्यामि। येन व्याघ्रं मत्वा समीपवर्तिनः क्षेत्रपाला एनं न निष्कासयिष्यन्ति। तथानुष्ठिते रासभो यथेच्छया यवभक्षणं करोति। प्रत्यूषे भूयोऽपि रजकः स्वाश्रयं नयति।'

२. अधोलिखितः संस्कृतगद्यांशः हिन्दीभाषया अनूद्यताम्—

सताम् आचारः सदाचार इत्युच्यते। सज्जनाः विद्वांसो यथा आचरन्ति तथैव आचरणं सदाचारो भवति। सज्जनाः स्वकीयानि इन्द्रियाणि वशे कृत्वा सर्वैः सह शिष्टतापूर्वकं व्यवहारं कुर्वन्ति। ते सत्यं वदन्ति, असत्यभाषणात् विरमन्ति. मातुः पितुः गुरुजनानां वृद्धानां ज्येष्ठानां च आदरं कुर्वन्ति, तेषामाज्ञां पालयन्ति, सत्कर्मणि प्रवृत्ताः भवन्ति।

३. अत्रोऽङ्कितहिन्दीसन्दर्भस्य संस्कृतभाषायामनुवादः कार्यः—

विद्या की शोभा धर्म से होती है। विद्वान् होकर भी जो आचारवान् नहीं होता उसकी विद्या व्यर्थ है। विद्या से केवल ज्ञान बढ़ता है। क्रिया के विना ज्ञान भार है। आचार से मनुष्य सत्कार्य में प्रवृत्त होता है। प्राचीन समय में आचार की प्रतिष्ठा थी।

४. संस्कृतभाषयाऽनूद्यताम् निम्नाङ्कितयो हिन्दीप्रसङ्गः—

ईश्वर पाप और पुण्य को देखता है। सत्य बोलने से मन शुद्ध होता है। प्राचीन काल में धर्मका राज्य था। सब लोग आपस में प्रेम करते थे। बलवान्

निर्बलों को नहीं सताते थे। स्त्रियाँ भी विद्या ग्रहण करती थीं। कृपा करके इस पत्र को पढ़ दो।

५. निम्नर्निर्दिष्टविषयेषु कमप्येकमवलम्ब्य संक्षिप्तः निबन्धः लेख्यः—

( क ) दाशरथेः रामस्य जीवनम्।

( ख ) राणा प्रतापस्य चरितम् ( राज्ञः प्रतापस्य )।

( ग ) महात्मागान्धिवृत्तम्। ( घ ) विद्या।

## १९६६

१. निम्ननिर्दिष्टसंस्कृतभागस्य हिन्दीभाषयानुवादो विधेयः—

कस्मिंश्चिद्वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचित् महत्यनावृष्टिः सञ्जाता प्रभूतवर्षाणि यावत्। तया तडागह्रदपल्वलसरांसि शोषमुपगतानि। अथ तैः सस्तगजैः स गजराजः प्रोक्तः—'देव! पिपासाकुला गजकलमा मृतप्रायाः, अपरे मृताश्च। तदन्विष्यतां कश्चिज्जलाशयो यत्र जलपानेन स्वस्थतां व्रजन्ति।"

२. अधोलिखितः संस्कृतगद्यांशः हिन्दीभाषया अनूद्यताम्—

सतां सङ्गतिः सत्सङ्गतिः कथ्यते। ये सज्जनाः साधवः पवित्रात्मानः सन्ति, तेषां सङ्गत्या मनुष्यः सज्जनः साधुः शिष्टश्च भवति। ये दुर्जनाः सन्ति तेषां सङ्गत्या मनुष्यो दुर्जनो भवति, पतनं विनाशं च प्राप्नोति। ये सज्जनैः सह उपविशन्ति तिष्ठन्ति उत्तिष्ठन्ति खादन्ति पिबन्ति च, ते तथैव स्वभावं धारयन्ति। मनुष्यस्य उपरि सङ्गतेः महान् प्रभावो भवति। यादृशैः पुरुषैः सह स निवसति, तादृश एव स भवति। उक्तञ्च—'संसर्गजा दोषगुणा भवन्ति।'

३. अधोऽङ्कितहिन्दीसन्दर्भस्य संस्कृतभाषायामनुवादः कार्यः—

वे लड़के दौड़ते हुए घर जा रहे हैं। तुम दोनों भोजन करके यहाँ कब आवोगे? सीता और लक्ष्मण के साथ राम वन को गये। श्रीरामचन्द्र ने शङ्कर की पूजा करके लङ्का में प्रवेश किया। तुम यहाँ शीघ्र आओ।

अथवा

मैं सिंह से नहीं डरता हूँ, दुर्जनों से डरता हूँ। गाँवों में मूर्खता अधिक है। दूसरे की निन्दा मत करो, निन्दा पाप है। वह सायकिल से ( द्विचक्रिकया ) पाठशाला जाता है और गेंद खेलने में व्यस्त रहता है।

४. संस्कृतभाषयाऽनूद्यताम् निम्नाङ्कितो हिन्दी प्रसङ्गः—

नौकर की सेवा से मालिक प्रसन्न होता है। वह आया और तुरन्त ही सोहन के साथ चला गया। काम करके जो मनुष्य थक जाता है उस पर स्वर्ग के रहने वाले देव कृपा करते हैं। हमें देश की रक्षा अवश्य करनी चाहिये।

५. निम्ननिर्दिष्टविषयेषु कमत्येकमवलम्ब्य संक्षिप्तः निबन्धः संस्कृतभाषायाम् लेख्यः—

( क ) कृष्णः गीतोपदेशकः ( द्र० पृ० २२१ )। ( ख ) जानकी जनकात्मजा ( द्र० पृ० २४१ )। ( ग ) कालिदासः। ( घ ) पं० मदनमोहनमालवीयः ( द्र० पृ० २६२ )। (ङ) संस्कृतभाषा ( द्र० पृ० १९७ )।

## पूर्वमध्यमा परीक्षा : संस्कृत विश्वविद्यालय

### १९६२

१. अधोलिखितस्य संस्कृतसन्दर्भस्य हिन्दीभाषयाऽनुवादः कार्यः—

पुरा समये प्रजापतिनिधिभूताः परोपकारपरायणा स्वार्थगन्धशून्या ब्राह्मणा एव नियमनिर्मातार आसन्, राजानस्तु तानेव नियमान् स्वयं परिपालयन्तः प्रजासु प्रचारयन्ति स्म। प्रजाप्रतिनिधयो ब्राह्मणा मन्त्रिपदं न्ययुज्यन्त। मन्त्रिमण्डलपरामर्शमन्तरेण किमपि राज्यकार्यमनुष्ठातुं नाशक्नुवन् राजानः। बौद्धग्रन्थेषु विलोक्यते यत् श्रीमान् अशोको महाराजो निखिलं स्वीयराज्यं बौद्धसंघाय दातुमैच्छत्, परन्तु तदीयो मन्त्री राधागुप्तस्तमेवं करणान्न्यषेधात्। प्रजाहितविरुद्धाऽऽचरणाद् बहून् शक्तिशालिनोऽपि राज्ञो भारतीयाः साम्राज्यसिंहासनात् पातितवन्त एव।

२ अधस्तना हिन्दीनिबन्धः सस्कृतेऽनुवाद्यः—

आर्यों ने अनेक कष्ट सह कर बड़े परिश्रम से अपनी इस सर्वोत्कृष्ट संस्कृति की रक्षा की है। इसके सुरक्षित रहने से न केवल भारत का ही वरन् विश्वभर का अब तक कल्याण हो सका है और भविष्य में भी होता रहेगा। इसी आर्यसंस्कृति के कारण समस्त विश्व में भारत का स्थान ऊँचा है। भारतीय शासन-सूत्र के सभी सञ्चालकों का यह कर्तव्य है कि वे इसकी विशेषता को सावधानी से रक्षा करें।

ब्रिटिश शासनकाल में इस पर विदेशी संस्कृति की थोड़ी बहुत धूल पड़ गई है। हम भारतीयों का कर्तव्य है कि उसे अविलम्ब झाड़-पोंछ कर साफ कर दें, जिससे इस दिव्य संस्कृति के प्रकाश से अखिल विश्व पुनः उज्ज्वल हो उठे।

## १९६३

१. निम्नलिखित विषयों में से किसी एक पर पाँच पृष्ठों में एक निबन्ध लिखिये:—

(क) दीपावली (द्र० पृ० २११)। (ख) महात्मा गाँधी (द्र० पृ० २३१)। (ग) वाराणसी नगरी (द्र० पृ० २१४)। (घ) जीवन में सदाचार का महत्त्व (द्र० पृ० २१९)। (ङ) आपका प्रिय ग्रन्थ (द्र० पृ० २२१)। (च) विज्ञान और मानव (द्र० पृ० २१०)।

२. निम्नलिखित उद्धरणों में से किसी एक का अनुवाद शुद्ध हिन्दी में कीजिये-

(क) कस्मिंश्चित् अधिष्ठाने ब्रह्मदत्तनामा ब्राह्मणः प्रतिवसति स्म। स च प्रयोजनवशात् ग्रामे प्रस्थितः स्वमात्रा अभिहितः यत् वत्स कथमेकाकी व्रजसि? तदन्विष्यताम् कश्चिद्द्वितीयः सहायः। स आह अम्ब मा भैषीः निरुपद्रवोऽयं मार्गः। कार्यवशात् एकाकी गमिष्यामि। अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थवाप्याः सकाशात् कर्कटमादाय मात्रा अभिहितः वत्स अवश्यं यदि गन्तव्यम् तदेष कर्कटोऽपि सहायः भवतु। तदेनं गृहीत्वा गच्छ। सोऽपि मातुर्वचनात् उभाभ्यां पाणिभ्यां तं संगृह्य कर्पूरपुटिकामध्ये निधाय पात्रमध्ये संस्थाप्य शीघ्रं प्रस्थितः।

(ख) अत्रान्तरे सज्जितक्रमेण सिंहेन स लम्बकर्णो व्यापादितः। ततस्तं हत्वा शृगालं रक्षकं निरूप्य स्वयं स्नानार्थं नद्यां गतः। शृगालेनापि लौल्यौत्सुक्यात् तस्य कर्णहृदयं भक्षितम्। अत्रान्तरे सिंहो यावत् स्नात्वा। कृतदेवार्चनः प्रतर्पित-पितृगणः समायाति तावत् कर्णहृदयरहितो रासभः तिष्ठति। तं दृष्ट्वा कोपपरीतात्मा सिंहः शृगालमाह—पाप किमिदमनुचितं कर्म समाचरितम्। यत् कर्णहृदयभक्षणेन अयमुच्छिष्टतां नीतः।

## १९६४

(१) संस्कृत में अनुवाद कीजिये—

संस्कृत में सबसे अच्छे व्याकरण के लिखने वाले महर्षि पाणिनि के बारे में

हमें अधिक मालूम नहीं है। महाभाष्य के अनुसार उनकी माँ का नाम दाक्षी था। इसी तरह कथासरित्सागर के अनुसार वे उपवर्ष के शिष्य और व्याडि कात्यायन तथा इन्द्रदत्त के समय के कहे जा सकते हैं। पञ्चतन्त्र के एक पद्य के अनुसार इनकी मृत्यु सिंहके द्वारा बताई जाती है। सुना जाता है कि ये बचपन में बहुत बुद्धिमान् नहीं थे। पढ़ने-लिखने से निराश होकर इन्होंने भगवान् शिव की आराधना की और उनसे चौदह प्रत्याहार सूत्रों को पाया। उन्हीं के आधार पर इन्होंने अष्टाध्यायी की रचना की।

( २ ) अधोलिखितेषु कमप्येकं विषयमवलम्ब्य नातिविस्तृतो निबन्धो लेख्यः–
( क ) ग्रामोत्सवः ( द्र० पृ० २१० ) ( ख ) अन्नोत्पादनसमस्या। ( ग ) कः प्रियः प्रियवादिनाम्। ( घ ) जननीजन्मभूमिश्च स्वर्गादपि गरीयसी (द्र० पृ० २०५ ( ङ ) संघे शक्तिः कलौ युगे। ( च ) व्यास-पूर्णिमा ( रक्षाबन्धनम् ) छ) विद्ययाऽमृतमश्नुते ( द्र० पृ० १९८ )।

## १९६५

( १ ) अधस्तनो हिन्दी निबन्धः संस्कृतेऽनुवाद्यः—

हिन्दुओं का पवित्र नगर वाराणसी भारत का सबसे पुराना नगर है। वाराणसी प्राचीन काल से ही सर्वाधिक प्रसिद्ध विद्यापीठ रही है। वाराणसी न केवल एक प्रसिद्ध विद्यापीठ ही है, वरन् यह एक प्रसिद्ध तीर्थस्थान भी है। प्रतिवर्ष इस पवित्र नगर में हजारों हिन्दू तीर्थयात्री तो आते ही हैं, विदेशी पर्यटकों को भी यह नगर अपनी ओर आकृष्ट करता रहता है। ऐसे सभी यात्री भगवती भागीरथी में स्नान कर, अपने समस्त पापों से मुक्त होकर पवित्र हो जाते हैं। स्नान करने के बाद वे लोग विश्वनाथ के मन्दिर में भगवान् शिव की पूजा करते हैं। प्रसन्नता की बात है कि स्वतन्त्र भारत में सर्वप्रथम इसी नगर में संस्कृत विश्वविद्यालय के रूप में वाराणसेय संस्कृत विश्वविद्यालय की स्थापना कर प्रादेशिक शासन ने लोकोत्तर कार्य किया है।

( २ ) अधोलिखितेषु कञ्चिदेकं विषयमाश्रित्य नातिविस्तृतः सुललितो निबन्धो लेख्यः—

१. ई० ६२ से ६९ तक के जितने निबन्ध परीक्षा में पूछे गये हैं, प्रायः उन सभी के उत्तर इस पुस्तक के निर्दिष्ट पृष्ठों में देखे जाते हैं।

( क ) ऋतुराजो वसन्तः ( द्र० पृ० २१२ ) ( ख ) सत्यमेव जयते नानृतम् ( द्र० पृ० २१८ ) ( ग ) देशाटनम् । ( घ ) विद्याधनं सर्वधनप्रधानम् ( द्र० पृ० १९८ ) ( ङ ) सदाचारः ( द्र० पृ० २१९ ) ( च ) अहिंसा परमो धर्मः ( द्र० पृ० २१८ ) ( छ ) परोपकारः ( द्र० पृ० २०६ ) ( ज ) सत्सङ्गतिः ( द्र० पृ० २०३ ) ( झ ) व्यायामः ( द्र० पृ० २०२ ) ( ञ ) संस्कृतभाषाया महत्त्वम् ( द्र० पृ० १९७ ) ( ठ ) दीपावली ( द्र० पृ० २११ ) ।

## १९६८

( १ ) अधस्तनो हिन्दी निबन्धः संस्कृतेनाऽनुवाद्य :–

विद्या की शोभा धर्म से होती है । विद्वान् होकर भी जो आचरवान् नहीं होता उसकी विद्या व्यर्थ है । उस विद्या का मूल्य नहीं होता जो आचरण में नहीं आती । केवल विद्या से तो किसी का ज्ञान बढ़ता है हृदय की महत्ता तो उसके आचरण से ही होती है । इसी लिए हम लोग महात्मा की पूजा करते हैं । चित्त की महत्ता से ही मानव महात्मा होता है । आचरण के बिना ज्ञान भा व्यर्थ होता हैं । आचारहीन को तो वेद भी पवित्र नहीं करते हैं । इसी लिये जीवन में आचरण का विशेष महत्त्व है ।

(२) अधस्तनेषु कञ्चिदेक विषयमाश्रित्य संक्षिप्तः सुललितश्च निबन्धो लेख्यः-

(क) उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ( द्र० पृ० २०७ )

(ख) संस्कृतभाषायाः महत्त्वम् ( द्र० पृ० १९७ ) (ग) गौः ।

(घ) विद्यायाः महत्त्वम् (द्र०पृ०१९८) ( ङ ) कश्चन ग्रामोत्सवः ( पृ० २१०

## १९६९

अधोनिर्दिष्टस्य संस्कृतेनाऽनुवादो विधेयः----

(१) इन्द्र ने राजा से कहा----राजन्, आहार से जगत् के संपूर्ण जीव-जन्तु उत्पन्न होते हैं । आहार से ही बढ़ते हैं और आहार से जीवित रहते हैं । अन्य वस्तुओं को त्याग कर भी मनुष्य बहुत दिनों तक जीवित रह सकता है, किन्तु आहार को त्याग कर जीवन को रक्षा करना असंभव है । अतः भोजन बिना मेरे प्राण शरीर से निकल जायेंगे । मेरी मृत्यु के पश्चात् मेरी स्त्री तथा पुत्र भी मर

जायेंगे। एक कबूतर की परीक्षा करके आप अन्य सब प्राणियों को मार रहे हैं। जिस धर्म से प्राणियों का नाश हो, वह धर्म नहीं, अधर्म है।

( २ ) अधोलिखिते कमप्येकं विषयमवलम्ब्य सरलतया सरलया संस्कृतगिरा नातिविस्तारो निबन्धो लेखनीयः—

( क ) भारते भातु भारती—भारतवर्षः ( द्र० पृ० २०४ ) ( ख ) स्वदेश-गौरवम् ( द्र० पृ० २०५ ) ( ग ) देशाटनम् ( घ ) स्वतन्त्रतादिवसः ( ङ ) स्वविद्यालयस्य वार्षिकोत्सवः ( द्र० पृ० २०१ ) ( च ) संस्कृतभाषा ( द्र० पृ० १९७ )

## १९६९

अधोनिर्दिष्टस्य गद्यभागस्य संस्कृतेऽनुवादो विधेयः—

( १ ) विद्या ही विद्यार्थी का आराध्य देवता है। विद्या अक्षय कोश है वह व्यय करने से ही बढ़ता है। विद्या प्राप्ति का सर्वोत्तम उपाय गुरु की सेवा है। जो गुरु की सेवा नहीं करता है, और जो गुरु के कठोर वचनों को सहन नहीं करता जो गुरुकुल में कष्ट नहीं सहता, जो इधर-उधर घूमने में समय नष्ट करता है, वह विद्वानों की सभा में आदर नहीं पाता।

( २ ) अधोलिखितेषु यथेच्छमेकं विषयमवलम्ब्य सरलया संस्कृतगिरा नातिविस्तारो निबन्धो लेखनीयः—

( क विद्याधनम् सर्वधनप्रधानम् ( द्र० पृ० १९८ ) ( ख ) संस्कृतभाषा-महत्त्वम् ( द्र० पृ० १९७ ) ( ग ) गंगा गरिमा ( द्र० पृ २४६ ) ( घ ) वाराणसी द्र० पृ २१४ ) ( ङ ) स्वविद्यालयवर्णनम् ( द्र० पृ० २०१ )

## 'ल्यप्' प्रत्ययान्तशब्दार्थाः

('ल्यप्' प्रत्यय उन्हीं धातुओं में जुड़ता है जिनके पहले उपसर्ग रहता है यथा-)

अनु + कृ = अनुकृत्य—नकलकर
अनु + गम् = अनुगम्य, अनुगत्य—अनुमगनकर
अनु + ग्रह = अनुगृह्य—दया कर
अनु + ज्ञा = अनुज्ञाय—आदेश देकर
अनु + नी = अनुनीय—अनुनय कर
अनु + भू = अनुभूय—अनुभव कर
अनु + मन् = अनुमत्य—आदेश देकर
अनु + शास् = अनुशिष्य-अनुसासन कर
अनु + शुच = अनुशोच्य—भलीप्रकार सोच कर
अनु + स्था = अनुष्ठाय—अनुष्ठान कर
अनु + वद् = अनूद्य—अनुवाद कर
अधि + इ = अधीत्य—पढ़ कर
अप + कृ = अपकृत्य—अपकार कर
अधि + गम् = अधिगम्य, अधिगत्य—पाकर
अभि + अस् = अभ्यस्य—रटकर
अव + गम् = अवगम्य—जानकर
अव + तृ = अवतीर्य—उतर कर
अव + मन् = अवमन्य—अपमान कर
आ + गम् = आगम्य, आगत्य—आकर
आ + दा = आदाय—लेकर
आ + दृ = आदृत्य—आदर कर
आ + धा = आधाय—स्थापित कर
आ + नी = आनीय—लाकर
आ + पृच्छ् = आपृच्छ्य—पूछकर
आ + रभ् = आरभ्य—आरम्भ कर
आ + रुह् = आरुह्य—चढ़कर
आविर् + भू = आविर्भूय-प्रकट होकर
आ + हृ = आहृत्य—लाकर
आ + ह्वे = आहूय—बुलाकर
उत् + डी = उड्डीय—उड़कर
उत् + तृ = उत्तीर्य—पार कर
उत् + पत् = उत्पत्य-उडकर पैदाहोकर
उत् + प्लुत् = उत्प्लुत्य—कूदकर
उप + कृ = उपकृत्य—उपकार कर
उप + गम् = उपगम्य—समीप जाकर
उप + स्था = उपस्थाय—पूजा कर
उप + हस् = उपहस्य—उपहास कर
नि + धा = निधाय—रखकर
नि + पत् = निपत्य—गिरकर
निर + गम् = निर्गम्य, निर्गत्य—निकल कर
निः + चि = निश्चित्य—निश्चय कर
परा + जि = पराजित्य—पछाड़ कर
परि + ग्रह = परिगृह्य—परिग्रह कर
परि + नी = परिणीय—विवाह कर
परि + धा = परिधाय—पहन कर
परि + कृ = परिष्कृत्य—साफ कर

परि + हृ = परिहृत्य—छोड़कर
परा + अय् = पलाय्य—भागकर
प्र + नि + पत् = प्रणिपत्य—प्रणाम-कर
प्र = नी = प्रणीय—बनाकर
प्रति + श्रु = प्रतिश्रुत्य—प्रतिज्ञाकर
प्रति + अभि + ज्ञा = प्रत्यभिज्ञाय—पहचानकर
प्रति + आ + गम् = प्रत्यागम्य, प्रत्यागत्य—लौट कर
प्र + दा = प्रदाय—देकर
प्र + बुध् = प्रबुध्य—जागकर
प्र + भू = प्रभूय—समर्थ होकर
प्र + विश् = प्रविश्य—प्रवेश कर
प्र + स्था = प्रस्थाय—प्रस्थान कर
प्र + हृ = प्रहृत्य—प्रहार कर
प्र + आप् = प्राप्य—पाकर
प्र + वच् = प्रोच्य—कह कर
वि + कॄ = विकीर्य—बिखेर कर
वि + कृ = विकृत्य—बिगाड़ कर
वि + क्री = विक्रीय—बेच कर
वि + ग्रह = विगृह्य—विग्रह कर
वि + चि = विचित्य—खोज कर
वि + चित् = विचिन्त्य—सोच कर
वि + ज्ञा = विज्ञाय—जानकर
वि + जि = विजित्य—जीतकर
वि + नी = विनीय—विनय कर
वि + भज् = विभज्य—बाँटकर
वि + लोक् = विलोक्य—देख कर
वि + श्रम् = विश्रम्य—आराम कर
वि + स्मृ = विस्मृत्य—भूल कर
वि + हस् = विहस्य—हंसकर
वि + हा = विहाय—छोड़ कर
वि + हृ = विहृत्य—बिहार कर
वि + आ + दा = व्यादाय—फैलाकर
सम् + क्षिप् = संक्षिप्य—संक्षिप्त कर
सम् + गम् = संगम्य, सङ्गत्य—मिलकर
सम् + ग्रह् = संगृह्य—इकट्ठा कर
सम् + चि = संचित्य—सञ्चय कर
सम् + दिह् = संदिह्य—सन्देहकर
सम् + धा = संधाय—जोड़ कर
सम् + भू = संभूय—पैदा होकर
सम् + कृ = संस्कृत्य—सफा कर
सम् + स्मृ = संस्मृत्य—स्मरण कर
सम् + हृ = संहृत्य—नाश कर

## तद्धितप्रत्ययान्तशब्दार्थाः

अकिञ्चनः = नास्ति किञ्चन यस्य—अतिदीन।

अतिराजा = अतिशयितः राजा—उत्कृष्ट राजा।

अद्यश्वीना = अद्य श्वो वा विजायते-आज या कल बियानेवाली (आसन्नप्रवा)।

आयुधिकः = आयुधेन जीवति—अस्त्रजीवी।

कुण्डोध्नी = कुण्डमिव ऊधो यस्याः—कुण्ड के समान स्तनवाली।

गाम्मन्यः = आत्मानं गां मन्यते—अपने को गौ माननेवाला।

जनता = जनानां समूहः—जनसमूह।

तारकितम् = तारकाः संजाता अस्य—तारे दीखते हैं जिसमें वह।

दाधिकम् = दध्ना संसृष्टं—दधिमिश्रित-ओदन।

दाशरथिः = दशरथस्यापत्यं पुमान्—राम आदि।

द्विकम्बल्या = द्वाभ्यां कम्बलाभ्यां क्रीता—दो सौ तोले ऊनों से खरीदी गयी।

द्विकाण्डा = द्वे काण्डे प्रमाणम् अस्याः—दो षोडश-हस्त-प्रमाण दण्डों से परिमित क्षेत्र भूमि।

द्विनावरूप्यः = द्वाभ्यां नौभ्याम् आगतः—दो नावों से आया हुआ।

द्विपुरुषा = द्वौ पुरुषौ प्रमाणम् अस्याः—दो पुरुषों के बराबर की खाई।

द्विविस्ता = द्वौ विस्तौ पचति—दो हेमाक्षों को गलाने वाली।

धर्म्यम् = धर्मादनपेतम्—धर्मसंबद्ध।

न्याय्यम् = न्यायाद् अनपेतम्—न्यायसंबद्ध।

पञ्चगुः = पञ्चभिः गोभिः क्रीतः—पाँच गयों से खरीदा हुआ।

पञ्चाश्वः = पञ्चभिः अश्वैः क्रीता—पाँच घोड़ों से खरीदी गयी।

पण्डितम्मन्यः = आत्मानं पण्डितं मन्यते—अपने को पण्डित माननेवाला।

पद्माक्षः = पद्मे इव अक्षिणी यस्य—कमलनयन।

पथिकः = पन्थानं गच्छति—रास्ता चलनेवाला।

पन्थकः = पथि जातः—मार्गोत्पन्न।

परमराजः = परमश्चासौ राजा—सर्वोत्कृष्ट राजा (बादशाह)।

पक्त्रिमम् = पाकेन निर्वृत्तम्—पाक से हुआ।

पाथेयम् = पथि साधु —मार्ग में उपकार ।
प्रावृषेण्यम् = प्रावृषि भवम्—वर्षा ऋतु में होने वाला ।
मातृष्वसेयः = मातृष्वसुः पुत्रः—मसियौत भाई ।
यौवनम् = युवतीनां समूहः— युवतियों का समुदाय ।
राजन्यः = राज्ञः अपत्यानि ( जातिः )—क्षत्रिय ।
वैयासकिः = व्यासस्य अपत्यं पुमान्— शुकदेवजी ।
श्वशुर्यः = श्वशुरस्यापत्यं पुमान्—साला ।
षाण्मातुरः = षण्णां मातॄणाम् अपत्यम्—छः माताओं का पुत्र-कार्तिकेय ।
सप्ताहः = सप्तानाम् अह्नां समाहारः—( क्रमिक ) सात दिन ।
सभ्रातृकः = भ्रात्रा सह वर्तमानः—भाई के साथ ।
समांसमीना = समायां विजायते—प्रतिवर्ष प्रसव करनेवाली ।
सर्वपथीनः = सर्वपथान् व्याप्नोति—समस्त मार्गों को व्याप्त करनेवाला ।
सायन्तनम् = सायं भवम्—साम को होनेवाला ।
सुगन्धि = शोभनः गन्धः यस्य तत् – सुन्दर गन्ध वाला-पुष्प ।
सुराजा = सुष्ठु राजा—सुन्दर राजा ।
सौधातकिः = सुधातुः अपत्यम् पुमान्—सप्तर्षि आदि ।

---

सावधानाः ?

विद्या विवादाय धनं मदाय<br>
शक्तिः परेषां परिपीडनाय ।<br>
खलस्य, साधोर्विपरीतमेतद्<br>
ज्ञानाय दानाय च रक्षणाय ॥



# समस्तशब्दार्थाः

अतिधीवानम् अतिक्रान्ता—मल्लाह को अतिक्रमण करने वाली ।

अतिनिद्रम् = निद्रा सम्प्रति न युज्यते असमय में निद्रा का लेना ।

अतिराजो = राजानम् अतिक्रान्ता - राजा को अतिक्रमण करने वाली—रानी।

अतिहिमम् = हिमस्य अत्ययः—हिम का नाश ।

अधिज्यधन्वा = अधिज्यं धनुः यस्य—धनुष चढ़ाये हुये ।

अन्तर्वत्नी = अन्तः अस्ति यस्यां गर्भः सा—गर्भवती ।

अश्ववडवम्, अश्ववडवौ = अश्वश्च वडवा च—घोड़ा और घोड़ी ।

इन्दुमतीजानिः = इन्दुमती जाया यस्य सः—इन्दुमती का पति ।

केशाकेशि = केशेषु केशेषु गृहीत्वा युद्धं प्रवृत्तम्—परस्पर केश पकड़ कर युद्ध ।

गाण्डीवधन्वा = गाण्डीवं धनुः यस्य—गाण्डीव नामक धनुष वाला-अर्जुन ।

त्रिचतुराः = त्रयो वा चतुरो वा—तीन या चार ।

दण्डादण्डि = दण्डैः दण्डैश्च प्रहृत्य प्रवृत्तं युद्धम्—परस्पर दण्डों से युद्ध ।

दुर्यवनम् = यवनानां व्यृद्धिः—यवनों की ऋद्धिहीनता ।

द्वित्राः = द्वौ वा त्रयो वा—दो या तीन ।

निर्मक्षिकम् = मक्षिकाणाम् अभावः—मक्षिकाओं का अभाव ।

निष्कौशाम्बिः = कौशाम्ब्या निर्गतः—कौशाम्बी से निकला हुआ ।

पञ्चगवधनः—पञ्च गावः धनं यस्य—५ गौवें ही धन रूप में हैं जिसके ।

पतिवत्नी = पतिः अस्ति यस्याः—सधवा स्त्री ।

पुत्रौ = पुत्रश्च दुहिता च—लड़का-लड़की ।

भारतः = भरता योद्धारोऽस्य संग्रामस्य—भरत जैसे योद्धा वाला संग्राम ।

भ्रातरौ = भ्राता च स्वसा च—भाई-बहिन ।

यथाबलम् = बलम् अनतिक्रम्य—बलानुसार ।

सक्षत्रम् = क्षत्राणां सम्पत्तिः—क्षत्रियों की सम्पत्ति ।

सचक्रम् = चक्रेण युगपत्—चक्र ( समूह ) के एक साथ ।

सतृणम् = तृणम् अपरित्यज्य, अत्ति—तृण को भी अलग न करके खाता है ।

साग्नि = अग्निग्रन्थपर्यन्तम् अधीते—अग्निग्रन्थपर्यन्त पढ़ता है ।

सुमद्रम् = मद्राणां समृद्धिः—मद्र देशवासियों की समृद्धि ।

स्त्रियम्मन्यः स्त्रीमन्यः = स्त्रीयम् आत्मानं मन्यते—अपने को स्त्री मानता है ।

— ❀ —

# व्यावहारिकः क्रियाकोशः

| हिन्दी | संस्कृत |
|---|---|
| अच्छा लगना | रोचते |
| आना | आगच्छति |
| उखाड़ना है | उत्पाटयति |
| उछलना | उच्छलति |
| उठना | उत्तिष्ठति |
| उड़ना | उड्डीयते |
| उतरना | अवतरति |
| ओढ़ना | आच्छादयति |
| करना | करोति,कुरुते |
| कहना | कथयति |
| कहरना | कुन्थति |
| काढ़ना | .उद्धरति |
| कांपना | कम्पते |
| कूटना | कुट्टयति |
| कूदना | कूदते |
| खरीदना | क्रीणाति |
| खाना | खादति |
| खींचना | कर्षति |
| खुजलाना | कण्डूयति,कण्डूयते |
| खोलना | उद्घाटयति |
| गठियाना | ग्रन्थति |
| गलना | गलति |
| गाड़ना | कीलति |
| गाना | गायति |
| गारना | गारयति |

| हिन्दी | संस्कृत |
|---|---|
| गिरना | पतति |
| गूथना | गुम्फति |
| घुसना | प्रविशति |
| घूमना | भ्रमति |
| घोटना | घोटते |
| चखना | स्वदते |
| चढ़ना | आरोहति |
| चलाना | चालयति |
| चबाना | चर्वति |
| चाटना | लेढ़ि |
| चालना | चालयति |
| चिपकाना | लासयति |
| चुंगना | चिनोति |
| चुराना | चोरयति |
| चूसना | चूषति |
| छाना | छादयति |
| छिपाना | गोपयति |
| छिनना | आच्छिनत्ति |
| छूना | स्पृशति |
| छेदना | छिद्रयति |
| छोड़ना | त्यजति |
| जलाना | ज्वालयति |
| जागना | जागर्ति |
| जानना | जानाति |
| जाना | गच्छत्ति |

| हिन्दी | संस्कृत | हिन्दी | संस्कृत |
|---|---|---|---|
| जोड़ना | योजयति | नोंचना | लुञ्चति |
| झारना | झारयति | पकाना | पचति |
| टपकना | स्रवति | पटकना | पोथयति |
| टूटना | त्रुठ्यति | पढ़ना | पठति |
| ठगना | वञ्चयते | पढ़ाना | पाठयति |
| ठहरना | तिष्ठति | पन्हाना | प्रस्नौति |
| डपटना | भर्त्सयति | परोसना | परिवेषयति |
| डरना | बिभेति | पसरना | प्रसरति |
| ढूँढ़ना | गवेषयति | पसारना | प्रसारयति |
| ढोना | वहति | पालना | पालयति |
| तानना | तनोति | पिघलना | द्रवति |
| तेजकरना | तेजयति | पीटना | ताडयति |
| तोड़ना | त्रोटयति | पीना | पिबति |
| थूकना | ष्ठीवति | पीसना | पिनष्टि |
| दबाना | दाम्यति | पुकारना | आह्वयति |
| दुखाना | दुनोति | पूछना | पृच्छति |
| दूहना | दोग्धि | पूजना | पूजयति |
| देखना | पश्यति | पखाना करना | हदते |
| देना | ददाति | पेशाब करना | मूत्रयति |
| धरना | धारयति | पोछना | प्रोच्छति |
| धोना | क्षालयति | फटकना | प्रस्फोटयति |
| धौंकना | धमति | फरकना | स्फुरति |
| नहाना | स्नाति | फरना | फलति |
| नापना | परिमाति | फारना | विदारयति |
| नाशकरना | नाशयति | फुसलाना | प्रलोभयति |
| निकलना | निर्गच्छति | फूकना | फुत्करोति |
| निखोरना | निष्कुष्णाति | फूटना | स्फुटति |
| निगलना | निगिरति | फेकना | प्रक्षिपति |

| हिन्दी | संस्कृत | हिन्दी | संस्कृत |
|---|---|---|---|
| फैलना | प्रसरति | बोलना | वदति |
| फैलाना | विस्तारयति | बोखलाना | प्रलपति |
| फोड़ना | भिनत्ति | भरना | भरति |
| बटोरना | सञ्चिनोति | भागना | पलायते |
| बढ़ना | वर्द्धते | भींगना | क्लिद्यति |
| बढाना | वर्द्धयति | भुनना | भृज्जति |
| बदलना | परिवर्तते | भूलना | विस्मरति |
| बनाना | रचयति | भेजना | प्रेषयति |
| बन्द करना | विदधाति | मरना | म्रियते |
| बसना | वसति | मलना | मर्दयति |
| बाँचना | वाचयति | मांगना | याचते |
| बाँटना | वितरति | मानना | मन्यते |
| मुंह बाना | (मुखं) व्याददाति | मारना | हन्ति |
| बिखेरना | विकिरति | मिलना | मिलति |
| बिगड़ना | दुष्यति | मिलाना | मेलयति |
| बिगाड़ना | दूषयति | मोड़ना | मोटयति |
| बिताना | यापयति | रंगना | रञ्जयति |
| बिसारना | विस्मरति | रगड़ना | घर्षति |
| विहरना | विहरति | रटना | रटति |
| बितना | व्यत्येति | रुकना | विरमति |
| बुझना | निर्वाति | रोकना | निवारयति |
| बुझाना | निर्वापयति | रोना | रोदिति |
| बुनना | वयति | रोपना | रोपयति |
| बुहारना | सम्मार्जयति | लगना | लगति |
| बूझना | बुध्यते | लटकना | लम्बते |
| बेचना | विक्रीणाति | लपेटना | वेष्टते |
| बैठना | उपविशति | लांघना | लंघते |
| बैठाना | उपवेशयति | लिखना | लिखति |

| हिन्दी | संस्कृत | हिन्दी | संस्कृत |
|---|---|---|---|
| लिखाना | लेखयति | समझना | बुध्यते |
| लीपना | लिम्पति | समाना | सम्माति |
| लूटना | लूण्ठति | सलाह करना | मन्त्रयते |
| लेना | गृह्णाति | सवाँरना | प्रसाध्नोति |
| लौटना | निवर्तति | सहना | सहते |
| सँभालना | सम्भालयति | सिकोड़ना | सङ्कोचयति |
| सजाना | सज्जीकरोति | सिखाना | शिक्षयति |
| | | सीखना | शिक्षते |

( पं० वासुदेव द्विवेदी, संचालक–सार्वभौम संस्कृत प्रचार कार्यालय वाराणसी, के सौजन्य से प्राप्त )



# व्यावहारिकः शब्दकोशः

| हिन्दी | संस्कृत |
|---|---|
| **धान्य-वर्गः** | |
| अन्न | सिद्धान्नम् (भात०) |
| अनाज | धान्य |
| अरहर | आढकी |
| ऊड़द | माषः |
| कालाऊड़द | राजमाषः |
| गेहूँ | गोधूमः |
| चना | चणकः |
| चावल | तण्डुलः |
| जौ | यवः |
| तिल | तिलः |
| तिसी | अतसी |
| बजड़ा | वर्जरी |
| मक्का | मकोयः |
| मूँग | मुद्गः |
| मटर | कलायः |
| मसूर | मसूरः |
| सरसो | सर्षपः |
| सांवा | श्यामाकः |
| **फल-वर्गः** | |
| अंगूर | आमद्राक्षा |
| अखरोट | अक्षोटकः |
| अनार | दाडिमम् |
| अमड़ा | आम्रातकम् |
| अमरूद (लताम) | पेरुकम् |

| हिन्दी | संस्कृत |
|---|---|
| आँवला | धात्रीफलम् |
| आम | आम्रम् |
| कक्ड़ो | कर्कटी |
| कन्द | कन्दः |
| कटहर | पनसः |
| कपित्थ | कपित्थम् |
| कलमीआम | राजाम्रम् |
| काजू | काजूतकः |
| किसमिस | लघुद्राक्षा |
| केला | कदलीफलम् |
| खजूर | खर्जूरः |
| खर्बूजा | खर्बूजम् |
| खीरा | त्रपुषम् |
| छुहाड़ा | पिण्डखर्जूरः |
| जामुन | जम्बूफलम् |
| तरबूज | कालिङ्गम् |
| दाख | द्राक्षा |
| नारङ्गी | नारङ्गम् |
| नारियल | नारिकेलम् |
| निम्बू | निम्बुकम् |
| पिस्ता | निकोचकम् |
| फूट | स्फुटी |
| बढ़हर | लकुचम् |
| बादाम | बातादः |
| बेर | बदरीफलम् |

| हिन्दी | संस्कृत |
|---|---|
| मखाना | मखान्नम् |
| महुआ | मधूकः |
| मूँगफली | मण्डी |
| शरीफा | सीताफलम् |
| सिंघाड़ा | शृङ्गाटकम् |
| सुपारी | पूगीफलम् |

शाक-वर्गः

| हिन्दी | संस्कृत |
|---|---|
| अरुई | आलुकी |
| आलू | आलुकम् |
| ओल, सूरन | शूरणः |
| करैला | कारवेल्लम् |
| कुम्हड़ा (कुम्हड़) | कुष्माण्डम् |
| गाजर | गृञ्जनम् |
| गोभी (कोबी) | गोजिह्वा |
| चोराई | तण्डुलीयकः |
| तरकारी | व्यञ्जनम् |
| तरोई (झिमनी) | कोशातकी |
| नेनुआँ (घेउड़ा) | महाकोशातकी |
| परवल | पटोलः |
| पोई | पोतकी |
| पोदीना | पुदिनः |
| प्याज | पलाण्डुः |
| बण्डा | पिण्डालुः |
| बथुआ | वास्तुकम् |
| भण्टा | वृन्ताकम् |
| भिंडी (रामतरोई) | राजकोशातकी |
| मूली | मूलकम् |
| सेम | शिम्बिः |

| हिन्दी | संस्कृत |
|---|---|
| लहसुन | लशुनः |
| लौकी (सजमन) | अलाबूः |

उपस्कर (मसाला) वर्गः

| हिन्दी | संस्कृत |
|---|---|
| आदी | आर्द्रकम् |
| इलायची | एला |
| जबाइनि | जवानी |
| जीरा | जीरकम् |
| तेजपात | तेजपत्रम् |
| धनियाँ | धान्यकम् |
| नमक | लवणम् |
| मसाला | बेशवारः,उपस्कर |
| मिर्च | मरिचम् |
| मिरचाई | रक्तमरिचम् |
| मेथी | मेथिका |
| लौंग | लवङ्गम् |
| सेंधानमक | सैन्धवम् |
| सौंफ | मधुरिका |
| हल्दी | हरिद्रा |
| हींग | हिङ्गुः |

भक्ष्य-वर्गः

| हिन्दी | संस्कृत |
|---|---|
| अंचार | आसुतम् |
| अमावट | आम्रातकः |
| आटा | पिष्टकम् |
| ईख (गन्ना) | इक्षुः |
| कढ़ी | क्वथिता |
| खिचड़ी | कृशरा |
| गुड़ | गुडः |
| घी | घृतम् |

| हिन्दी | संस्कृत |
|---|---|
| चटनी | अवलेहः |
| चाय | कामरूपकः, चाहम् |
| चिउड़ा (चूड़ा) | चिपिटकः |
| चीनी | शर्करा, सिता |
| चोखा, भर्ता | भरित्रम् |
| जलेबी | कुण्डलिनी |
| तमाकू | तमाखुः |
| तरकारी | व्यञ्जनम् |
| तेल | तैलम् |
| दाल, कच्ची) | द्विदलम् |
| दाल (रंधी) | सूपः |
| पान | ताम्बूलम् |
| पापड़ | पर्पटः |
| पूआ | अपूपः, पूपः |
| पूड़ी | शष्कुली |
| बड़ी | बटी |
| बेसन | बेसनम् |
| भाजी | भाजी |
| भात | भक्तम्, अन्नम् |
| भूजा | भजनम् |
| मलाई | सन्तानिका |
| मांड़ | मण्डम् |
| मिठाई | मोदकः |
| मिश्री | सितोपलः |
| मैदा | समिता |
| रोटी | रोटिका |
| लड्डू | लड्डुकः |
| लपसी | यवागूः |

| हिन्दी | संस्कृत |
|---|---|
| लावा | लाजाः (ब०व०) |
| लिट्टी | कङ्गारकर्कटी |
| लोई | लोप्त्री |
| सत्तू | सक्तुः |
| सोहारी | सोहालिका |
| हलुआ | संयावकः |
| होरहा (ओरहा) | होलकः |

गृह-वस्तु-वर्गः

| हिन्दी | संस्कृत |
|---|---|
| अंगीठ | अङ्गारशकटी |
| अरगनी | लगनी |
| आइना | दर्पणम् |
| ओखल | उलूखलम् |
| कङ्घी | कङ्कतिका |
| कुंजी | कुञ्जिका |
| कुल्हाड़ा | कुठारः |
| कुल्हाड़ी | कुठारिका |
| कैंची | कर्तरी |
| खड़ाऊं | काष्ठपादुका |
| खाट | खट्वा |
| खूंटी | नागदन्तः |
| घड़ी | घटीयन्त्रम् |
| चलनी | चालनी |
| चूल्हा | चुल्लिका |
| चौकी | पीठिका |
| छड़ी | यष्टिका |
| छाता | छत्रम् |
| छूरी | छुरिका |
| जांत | पेषणी |

| हिन्दी | संस्कृत |
|---|---|
| जूता | उपानत् |
| झाड़ू | मार्जनी |
| टेकुआ | तर्कुः |
| डिब्बा | सम्पुटकः |
| डोरा | सूत्रं, तन्तुः |
| डोरी | रज्जुः |
| तराजू | तुला |
| ताला | तालकम् |
| ताली, कुंजी | तालिका, कुञ्जिका |
| दिआसलाई | दीपशलाका |
| दीआ | दीपकः |
| दीयठ | दीपयष्टिः |
| पङ्खा | व्यजनम् |
| पलङ्ग चारपाई, खाट | पर्यङ्कः |
| पीढ़ा | पीटम् |
| पेटी | पेटिका |
| बत्ती | वर्त्तिका |
| घोरा | गोणी |
| बोरसी | हसन्ती |
| मूसर | मुसलम् |
| लोढ़ा | शिलापुत्रः |
| सन्दूक | मञ्जूषा |
| सरौता | शंकुला |
| सिलोट | शिला |
| सीढ़ी | सोपानम् |
| सूई | सूचिः |
| सूप | सूर्पम् |

| हिन्दी | संस्कृत |
|---|---|
| पात्र-वर्गः | |
| कटोरा | कंसः, कटोरः |
| कटोरी | कटोरी |
| कराह, कराही | कटाहः, कटाही |
| कल्छुल | दर्विः |
| कसोरा (शर्वा) | शरावः |
| गिलास | लघुजलपानपात्रम् |
| घड़ा | घटः, कलशः |
| चमचा | चमसः |
| चिमटा | सन्दंशकः |
| तावा | ऋजीषम् |
| दाल का पात्र | द्विदलभोजनपात्रम् |
| थाली | स्थाली |
| वटलोही | भोजनपाकपात्रम् |
| भाँड | भाण्डम् |
| लोटा | जलपानपात्रम् |
| सडसी | सन्दंशिका |
| हड़िया | हण्डिका |
| वस्त्र-वर्गः | |
| अंगरखा(कोट आदि) | अङ्गरक्षकः |
| अंगौछा | अङ्गप्रोच्छनम् |
| कमीज | कञ्चुकः |
| गद्दा | तूलतल्पम् |
| चद्दर | कञ्चुकी |
| टोपा | टोपिका |
| तकिया | उपधानम् |
| तोसक | तूलिका |
| धोती | धातवस्त्रम् |

| हिन्दी | संस्कृत |
|---|---|
| पगड़ी | उष्णीषः |
| रजाई | तूलपटी |
| रूमाल | कर्पटः |
| लँगोटी | कौपीनम् |
| बिछौना | तल्पम् |
| साढ़ी | शाटी |
| सेज, चटाई | कटः |

**लेखनसामग्री-वर्गः**

| हिन्दी | संस्कृत |
|---|---|
| कलम, पेन | कलमः, लेखनी |
| कांपी | लिपिपुस्तिका |
| कागज | कर्गजम् |
| दावात | मसीपात्रम् |
| पन्ना | पत्रम् |
| पोथी | पुस्तकम् |
| रजिस्टर | पञ्जिका |
| स्याही | मसी |

**कृषिसामग्री-वर्गः**

| हिन्दी | संस्कृत |
|---|---|
| कुदार | कुद्दालः |
| कुदारी | कुद्दालिका |
| खुरपा | क्षुरप्रः |
| बाज | बीजम् |
| बैल | बलीवर्दः |
| हर | हलम् |
| हरवाहा | हलवाहः |
| हँसुआ, दाँती | दात्रम् |
| हेंगा | कोटिशः |
| खन्ती | खनित्रम् |

**यान-वर्गः**

| हिन्दी | संस्कृत |
|---|---|
| गाड़ी | शकटः |
| जहाज | पोतः |
| बैलगाड़ी | गन्त्री |
| रेलगाड़ी | धूमशकटः |
| सवारी | यानम् |
| हवाई जहाज | वायुयानम् |

**मान-वर्गः**

| हिन्दी | संस्कृत |
|---|---|
| कट्ठा | काण्डः |
| कौड़ी | वराकटम् |
| गज | गजः |
| छटाँक | कणमा |
| घुरा | घुरा |
| पैसा | पणः |
| बीघा | विग्रहा, कुडवः |
| मन | मणम् |
| रूपया | रूप्यकम् |
| सेर | शेरः, प्रस्थः |

## व्यावहारिका अव्यय-शब्दाः

| हिन्दी | संस्कृत | हिन्दी | संस्कृत |
|---|---|---|---|
| अचानक | अकस्मात्,सहसा | जैसे | यथा |
| अच्छा, खेर | अस्तु | जैसे-तैसे | यथाकथञ्चित् |
| अपने आप | स्वयम् | झटपट | झटिति |
| अब | अधुना | तब | तदा |
| अलावा | ऋते | दूसरी तरफ | अन्यत्र |
| आज | अद्य | दोनों जगह | उभयत्र |
| इतः | यहाँ से | धीरे | शनैः |
| इधर-उधर | इतस्ततः | धीरे-धीरे | शनैःशनैः |
| इस प्रकार | एवम् | नहीं | नहि, न, नो |
| ऊपर | उपरि, ऊर्ध्वं | नहीं तो | अन्यथा |
| ऐसे | इत्थम् | निश्चय | बाढम् |
| कब | कदा | नीचे | नीचैः अधः |
| कभी | कदाचित् | परसों | परश्वः |
| कल ( गत ) | ह्यः | परन्तु | अपितु |
| कल ( अग्रिम ) | श्वः | पहले | प्राक्, पूर्वम् |
| कैसे | कथम् | पीछे | पश्चात् |
| क्या | किम् ? | फिर | पुनः |
| चारों ओर | समन्तात् | बल्कि | प्रत्युत |
| जब | यदा | बहुत जगह | बहुत्र |
| जरूर | अवश्यम् | यहां | अत्र |
| जल्दी | त्वरितम्, शीघ्रम् | लेकिन | परन्तु, किन्तु |
| जहाँ | यत्र | वहाँ | तत्र |
| जहाँ से जिस लिये | यतः | | |

| हिन्दी | संस्कृत | हिन्दी | संस्कृत |
| --- | --- | --- | --- |
| वहाँ से | ततः | सवेरे | प्रातः |
| बिना | विना, | सायङ्काल | सायम् |
| वैसे | तथा | | |
| सब जगह | सर्वत्र | हाँ | आम्, ओम् |

इति 'मिथिला'महीस्थ'दरभङ्गा'मण्डलान्तर्गत 'तरौनी' 'ग्रामवासिश्रीमत्तेज-नारायण-मोदनारायण-सूर्यनारायणझामहोदयत्रयाऽनुजेन श्रीविद्या-भारती-प्रदीप-सरस्वती-सन्ततिचतुष्टयजनकेन श्रीरामचन्द्र-झाव्याकरणाचार्येण सम्पादितं सपरिशिष्टं संस्कृतव्याकरणं समाप्तम्

श्रीकाशीपतिः पातु वः

## ( प्रौढ ) अनुवाद-रत्नाकर

### डॉ० रमाकान्त त्रिपाठी

मनोवैज्ञानिक रूप से संस्कृत व्याकरण के साथ-साथ संस्कृतानुवाद का प्रौढ ज्ञान कराने में विद्वान् लेखक को अनुपम शैली का एक प्रवर्तक ही माना जा सकता है। प्रस्तुत प्रौढ़ संस्कृतानुवाद रचना के लिये डॉ० त्रिपाठी जी ने बड़े ही मनोयोग से आजतक के प्रकाशित सभी अनुवाद की पुस्तकों का गम्भीर अध्ययन किया है। इस संस्करण की विशेषता यह है कि इसके सांगोपांग अध्ययन से छात्रों को संस्कृत व्याकरण का भी पूर्ण ज्ञान हो जायगा और लघुकौमुदी या सिद्धान्तकौमुदी का ज्ञान उन्हें भरपूर होगा और वे कठिन से कठिन गद्य-पद्यों का अनुवाद सहज में करने लगेंगे। पुस्तक के अन्त में चुने हुए व्यावहारिक शब्द कोशों का संग्रह भी कर दिया गया है जो राष्ट्रभाषा ज्ञान के लिये भी अधिक उपयोगी है। २०-००

## अनुवाद चन्द्रिका

### डॉ० ब्रह्मानन्दत्रिपाठी एम. ए. पी-एच. डी.

संस्कृत भाषा के प्रचार-प्रसार में सक्षम, अनुवाद करने की सरलतम विधि से परिपूर्ण, छात्र तथा प्रौढ़ों के लिये समानरूप से उपयोगी, कक्षा ८ से बी० ए० तक के पाठ्यक्रम की दृष्टि से लिखी गयी, अनुवादोपयोगी प्रसिद्ध शब्द एवं धातुरूपों से समृद्ध, व्याकरण के पारिभाषिक शब्दों के विश्लेषण से युक्त, छात्रों से कहाँ-कहाँ त्रुटियाँ होती हैं, उन-उन अंशों को उदाहरण के रूप में देकर उनको सावधान करानेवाली और अथ से इति तक ध्यानपूर्वक पढ़ लेने के पश्चात् अन्य ग्रन्थ की आवश्यकता न पड़ने का विश्वास दिलाने वाली यह पुस्तक परीक्षा की दृष्टि से लिखी गयी है।

आशा एवं विश्वास है कि अनुवाद सीखने के इच्छुक इससे पूर्ण लाभान्वित होंगे।

शीघ्रप्राप्य

## संस्कृत साहित्य का इतिहास ( बृहत् संस्करण )

### लेखक—श्री वाचस्पति गैरोला

( बिहार आदि का साहित्याचार्य परीक्षा पाठ्य स्वीकृत )

उत्तरप्रदेश सरकार द्वारा पुरस्कृत

आर्यों का आदि देश एवं आर्य-भाषाओं के उद्भव से लेकर उन्नीसवीं सदी तक की सहस्राब्दियों में संस्कृत-साहित्य की जिन विभिन्न विचारवीथियों का निर्माण हुआ और राजवंशों के प्रश्रय से संस्कृत भाषा को जो गति मिली उसका भी समावेश पुस्तक में देखने को मिलेगा। ३५-००